आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४४

वेदव्यासप्रणीतमहाभारतान्तर्गता

# श्रीमद्भगवद्गीता ।

श्रीमद्धनुमद्विरचितपैशाचभाष्यसहिता ।

एतत्पुस्तकम्

वे० शा० रा० "काशीनाथशास्त्री आगाशे" इत्यतः,

तथा वे० शा० रा० "बाबाशास्त्री फडके"

इत्येतैश्च संशोधितम् ।

तच्च

बी० ए० इत्युपपदधारिणा

विनायक गणेश आपटे

इत्यनेन

पुण्याख्यपत्तने

श्रीमत् 'महादेव चिमणाजी आपटे' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८५५

खिस्ताब्दाः १९३३



मूल्यं सार्धो रूपकः ( १॥ ) ।

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्य श्रीमद्धनुमद्विरचितपैशाचभाष्यसहितश्रीमद्भगवद्गीताग्रन्थस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

(क.) इति संज्ञितम्—समूलं पैशाचभाष्यं पूर्णम्, एतत्पुस्तकमानन्दाश्रमसंस्कृतग्रन्थसंग्रहालयस्थम् ।

(ख.) इति संज्ञितम्—केवलपैशाचभाष्यं पूर्णम्, एतत्पुस्तकं इत्वाग्रामनिवासिनां रा० रा० "गिरीन्द्रनाथदत्तइत्वेकर" इत्येतेषाम् ।

(ग.) इति संज्ञितम्—केवलपैशाचभाष्यं पूर्णम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

(घ.) इति संज्ञितम्—समूलं पैशाचभाष्यं पूर्णम्, एतत्पुस्तकं काशीक्षेत्रनिवासिनां वे० शा० रा० "पण्डितगोविन्ददास" इत्येतेषाम् ।

(ङ.) इति संज्ञित०—समूलं पैशाचभाष्यं पूर्णम्, एतत्पुस्तकं पुण्यग्रामनिवासिनां रा० रा० "रामरावदेशपाण्डे" इत्येतेषाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।



ॐ तत्सद्ब्रह्मणे नमः ।

हनुमद्विरचितपैशाचभाष्यसहिता

# श्रीमद्भगवद्गीता ।

( तत्र प्रथमोऽध्यायः । )

* सर्वं रसं गूढरविद्धरासभो नागामरावेगरविं शमन्तरा ।
वेलासरस्तीरकराजहंसः श्लोकामृतं सप्तशतेन पूरितम् ॥ १ ॥
(= प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥ २ ॥
करकमलनिदर्शितात्ममुद्रः परिकलितोन्नतबर्हिबर्हचूडः ।
× इतरकरगृहीतवेत्रतोत्रो मम हृदि संनिधिमातनोतु शौरिः ॥ ३ ॥
सारथ्यमर्जुनस्याऽऽदौ कुर्वन्गीतामृतं ददौ ।
लोकत्रयोपकाराय तस्मै कृष्णात्मने नमः ॥ ४ ॥

---

* एतच्छ्लोकव्याख्या ख. पुस्तके टिप्पण्या वर्तते सा यथा—' तत्रभगवानञ्जनीसूनुः श्रीभगवद्गीताभाष्यमारभमाणस्तदुद्भूतस्वश्रद्धातिशयेन तदुत्कर्षं व्यञ्जयति—सर्वमिति । अहं गूढरविद्धरासभो वेलासरस्तीरकराजहंसोऽपि सप्तशतेन पूरितं श्लोकामृतमन्तरा सर्वं रसमरावेगरविं शं नागामित्यन्वयः । तमनु पदव्याख्या—गूढं यथा भवति तथा रेणाग्निना लङ्कादहनेनेति यावत् । विद्धः सरलीं( त्रासी )कृतो रासभो रावणो येन स तथा । वेलाविशिष्टं सरः समुद्रस्तत्तीरकराजहंसः । स च ( समुद्र ) पारावारगामी । ईदृग्दुष्कृतकर्मणा प्रभुमाराधितवानपीति भावः । सप्तगुणितं शतं तेन पूरितं तत्परिमितं श्लोकाभिनममृतं भगवच्छ्रीकृष्णमुखनिर्गतमन्तरा विना सर्वं रसमानन्द[ मात्ररूप ]म् । ' एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ' इत्यादिश्रुतेः । अराणां तत्सदृशनाडीनां वेगो यस्मात्तदभिन्नं रविम् । अत्र मूलं श्रुतिद्वयं यथा—'अरा इव रथनाभौ संहता, यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः ।

"सूर्यो यथ सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ' ॥

एतादृशं [ शं ] वेदान्तैकवेद्यं सुखं नागां न प्राप्तमनेन तु प्राप्तमतः परमोत्कृष्टमेतद्व्याख्यायत इति भावः । एतदर्थ[ व्यञ्ज ]कं नाम व्याख्यानं श्रीरामकृष्णविदुषा कृतम् " । इति ।

= चतुश्चिह्नान्तर्गतो ग्रन्थो ग पुस्तके नास्ति । × इतरकरगृहीततोत्रवेत्र इति युक्तं पठितुम् ।

---

१ घ. 'थ वेत्रतोत्रै' ।

मलनिर्मोचनं पुंसां जलस्नानं दिने दिने ।
सकृद्गीताम्भसि स्नानं संसारमलनाशनम् ॥ ५ ॥
अकृत्यमपि कुर्वाणो भुञ्जानोऽपि यथा तथा ।
कदाचिन्नारकं दुःखं गीताध्यायी न पश्यति ॥ ६ ॥
वेदोदधिप्रमथितं वासुदेवसमुद्धृतम् ।
सन्तः पिबन्ति सततं गीतामृतरसायनम् ॥ ७ ॥
एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव ।
एको मन्त्रो यानि नामानि तस्य कर्माप्येकं तस्य देवस्य सेवा ॥ ८ ॥
वन्दे कृष्णार्जुनौ वीरौ नरनारायणावुभौ ।
धार्तराष्ट्रकुलोन्मत्तगजारोहणवल्लभौ ॥ ९ ॥

अस्य श्रीभगवद्गीताशास्त्रमन्त्रस्य वेदव्यासो भगवानृषिः । प्रायेणानुष्टुप्छन्दः । श्रीकृ१ष्णः परमात्मा देवता । अशोच्यानन्वशोचस्त्वमिति बीजम् । सर्वधर्मान्परित्यज्येति शक्तिः । ऊर्ध्वमूलमधःशाखमिति कीलकम् । मम मोक्षार्थे२ जपे विनियोगः । )

कारणं३ख्याति जगतां४ मा(ता)रणार्थमनागस(सा)म्५ ।
वारणाननमात्मानमद्वयं समुपास्महे ॥ १० ॥
प्रणम्य परमात्मानं विष्णुं जिष्णुं जगद्गुरुम् ।
परमात्मावबोधा६र्थं गीताव्याख्या मयोच्यते ॥ ११ ॥

अस्य संबन्धाभिधेयप्रयोजनान्युच्यन्ते । मोक्षस्तावत्प्रयोजनम् । स च गीताशास्त्रप्रतिपादितात्परमार्थसंबोधादेवेति परमार्थस्वरूपमभिधेयम् । परमात्मस्वरूपावबोधस्यास्य च शास्त्रस्य साध्यसाधनलक्षणः संबन्ध७ इति विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रम् । अत्र चार्जुनस्य राज्यार्थं शत्रुं जिगीषोर्धार्तराष्ट्रैः सह युद्धं संप्राप्तम् । तत्र सहायार्थं वृतेन भगवता वासुदेवेन सह रथमारुह्य योद्धुं युद्धभूमिं प्रविष्टोऽर्जुन उभयोरपि सेनयोर्मध्ये योद्धुं व्यवस्थितानाचार्यपितृपितामहपुत्रमित्रादीन्दृष्ट्वैते मया हन्तव्या मदर्थं चैते मरिष्यन्तीति पर्यालोच्य शोकमोहाभिभूतचित्ततया बहु प्रलप्य न योत्स्य इत्युक्त्वा युद्धादुपरराम । एवमुपरताय तस्मै तदविद्यामूलशोकमोहापनोदाय परमकारुणिको भगवान्भक्तवत्सलो वासुदेवो वेदान्तवाक्यैः समधिगम्यं परमार्थतत्त्वमुपदिदेश ।

---

१ क. ख. घ. श्रीविष्णुः । २ क. घ. ङ. °र्थे वि° । ३ क. ग. घ. ङ. °रणं ख्या° । ४ घ. °गतामा° । ५ ङ. °ममाग° । ६ घ. °बोधेन गी° । ७ ख. ग. घ. ङ. °सबन्धा° ।

( *संतोषं च गुरुं वन्दे परं संवित्प्रदायकम् ।
शान्तिसिंहासनारूढमानन्दामृतभोगदम् ॥ १ ॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ २ ॥

इह खलु सकललोकहितावतारः परमकारुणिको भगवान्देवकीनन्दनस्तत्त्वाज्ञानविजृम्भितशोकमोहविभ्रंशितविवेकतया निजधर्मपरित्यागपरधर्माभिसंधिपरमर्जुनं धर्मज्ञानरहस्योपदेशलवेन तस्माच्छोकमोहसागरादुद्दधार । तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध । तत्र तावद्धर्मक्षेत्र इत्यादिना विषीदन्निदमब्रवीदित्यन्तेन ग्रन्थेन श्रीकृष्णार्जुनसंवादप्रस्तावाय कथा निरूप्यते । ततः परमा समाप्तेस्तयोर्धर्मज्ञानार्थः संवादः । तत्र धर्मक्षेत्र इत्यनेन श्लोकेन धृतराष्ट्रेण हस्तिनापुरस्थितं स्वसारथिं समीपस्थं संजयं प्रति कुरुक्षेत्रवृत्तान्ते पृष्टे संजयो हस्तिनापुरस्थितोऽपि व्यासप्रसादाल्लब्धदिव्यचक्षुः कुरुक्षेत्रवृत्तान्तं साक्षात्पश्यन्धृतराष्ट्राय निवेदयामास दृष्ट्वा तु पाण्डवानीकमित्यादिना ॥

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ॥
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

धर्मक्षेत्र इति । हे संजय, मामका दुर्योधनादयश्चान्ये पाण्डवा युधिष्ठिरादयो युयुत्सवो योद्धुकामा धर्मक्षेत्रे धर्मप्रसवभूमौ कुरुक्षेत्रे समवेता मिलिताः सन्तः किमकुर्वत किं विदधुः ॥ १ ॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

दृष्ट्वेति । तु पुनः । तथा तेषु मिलितेषु सत्सु स दुर्योधनोऽनेकवीरसमुदाये लब्धदीप्तिर्दुःखेन योधयितु(तुं)मशक्य आचार्यं धनुर्वेदोपदेष्टारं द्रोणमुपगम्याऽऽधिक्येनाऽऽचार्यत्वकृतेन संगम्य सङ्गो (संगतो) भूत्वा वचनम[न]न्तरमब्रवीत् । किं कृत्वा पाण्डवानीकं [व्यूढं] दृष्ट्वा । पाण्डवानां युधिष्ठिरादीनामनीकं सैन्यं व्यूढं सूचीव्यूहरचनया संपन्नं दृष्ट्वाऽवलोक्य ॥ २ ॥

---

* एतदादिद्वितीयाध्यायस्थदशमश्लोकव्याख्यासमाप्तिपर्यन्तं ख. पुस्तकेऽधिकम् । इदं च श्लोकार्थज्ञानोपयुक्तम् ।

दुर्योधनो द्रोणं प्रति यद्वचोऽवोचत्तदेव नवभिः श्लोकैः संजयो धृतराष्ट्रं प्रत्याह—

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ॥
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

पश्यैतामिति। हे आचार्यैतां पाण्डुपुत्राणां महतीं सप्ताक्षौहिणीपरिमितां चमूं सेनां पश्य। कथंभूतां तव शिष्येण द्रुपदपुत्रेण धृष्टद्युम्नेन धीमता तव शिष्यत्वेन सेनाव्यूढ(ह)विन्यासादिबुद्धिमता व्यूढां व्यूह[वि]न्यासेन स्थापिताम्। तव शिष्येणेति तवापि पाण्डवसेनायां कश्चिदनुरागोऽस्तीति कौटिल्यवचनं दुर्योधनस्येति। [पाण्डुपुत्राणामिति] पाण्डुः पाण्डुधर्मा तत्पुत्रा जारपुत्रा इत्यभिप्राय(यं) वचनं दुर्योधनस्य ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ॥
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

अत्रेति। अत्रास्यां चम्वाम्। अमी शूराः शौर्येण शत्रुधर्मेणोपेता महेष्वासा इषवो बाणा अस्यन्ते यैस्तानि धनूंषि महान्ति येषां ते महेष्वासाः। कथंभूताः, युधि संग्रामे भीमार्जुनसमाः। भी(भिया) भयेन मीयत इति चाकितैरेव विदा(वीरा)न्तरैर्विलोक्यत इति भीमः। अर्जुनः पशुपतिसंग्रामोपार्जितयशोविभूतिभिरर्जुनं पाण्डुरं संपादितं विश्वं येन सोऽयमर्जुनः। ताभ्यां समास्तुल्याः। युयुधानो वीरवरैरेव मिश्रीभावेन युद्धाविष्टो युध मिश्रणे इति धातुपाठात्। विराटो विनतो विपक्षभूतो [वा] राट्, राजा यस्य शत्रुमूदनस्य स विराटः, द्रुपदो द्रुवद्वृक्षवत्संग्रामे निश्चलौ(ले)पादौ(पदे) यस्य स द्रुपदः। महारथः, प्रत्येकं महारथत्वविशेषणम्। युयुधानो महारथ इत्यादि ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ॥
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

धृष्टेति। धृष्टकेतुर्धृष्टः प्रगल्भः शत्रुविनाशनः केतुश्चिह्नं ध्वजादिर्यस्य धृष्टानां रणे प्रगल्भानां केतुर्विनाशक इति वा धृष्टकेतुः। चेकितानः संग्रामे कुशलः। काशिराजः। काशो ब्रह्मतत्त्वप्रकाशो यस्यां निवसतां सुलभः सा काशी तस्या राजा काशिराजो वैरी(रि)पुरविजयी, शैब्यः संग्रामविजयी संग्रामविजयार्हः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ॥
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

युधामन्युरिति। युधामन्युश्च परं विक्रान्तो वीर्यवानुत्तमौजाः सौभद्रश्च परं द्रौपदेया द्रौपद्यास्तनयाः प्रतिविन्ध्यादय एते सर्वे महारथाः। एते च महा[य] युद्धोत्सवायाऽऽसमन्ताद्रथाः शस्त्रास्त्र[प्र]भूता येषां ते महारथाः।

"एको दश सहस्राणि योधयेद्यस्तु धन्विनः।
अस्त्रशस्त्रप्रवीणश्च महारथ इति स्मृतः॥
अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः।
रथी त्वेकेन यो युध्येत्तन्न्यूनोऽर्धरथो मतः" इति ॥ ६ ॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम॥**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**

**अस्माकमिति।** हे द्विजोत्तम तु पुनर्येऽस्माकं धार्तराष्ट्राणां विशिष्टाः पाण्डवसेनावीरेभ्योऽपि श्रेष्ठास्तान्निबोधावधारय। मम सैन्यस्य नायका जेतारस्तांस्ते तुभ्यं संज्ञार्थं ब्रवीमि ॥ ७ ॥

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः॥**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

**भवानिति।** भवांस्त्वमेव तावत्पश्य तव युद्धकौशल्योपदेशेन भगवान्पशुपतिरर्जुनेन निर्जितः स त्वम्। **भीष्मः** सकलक्षत्रियकुलकालनात्रिचक्रायु(यु)धलीलावतारपरशुरामस्यापि रणे भयंकरत्वाद्भीष्मः। **कर्णो** वैरिणां कर्तन[कर]त्वात्कर्णः। **कृपः** शत्रुहिंसनशीलः कृपातुर्हिंसार्थः। **अश्वत्थामा।** अश्नुते व्याप्नोति तदेतादृशं[स्था]मबलं (लं)यस्य सः। यद्वा। अश्नाति वैरिणो भक्षयति [येन तादृशं स्थाम बलं यस्य सः] अश्वत्थामा। स किल लोकोपसंहारदक्षस्य दाक्षायणीरतेर्लीलावतारो यस्मात्। **विकर्णः।** यस्यासमवीरसंग्रामोपार्जितकीर्तिमञ्जरीवर्ज(र्ण)नायां प्रत्यर्चि(र्थि)[भू]ताः पार्थिवा विगतकर्णा बधिरा इवोद्विजन्तो भवन्तीति **विकर्णः।** पार्वतीपतिदत्तवरः **सौमदत्तिः।** तथैव च वयं (यथा) भवान्भीष्मश्च त्रैलोक्यपराजयक्षमो तथैव चेतरेऽपीत्यर्थः ॥ ८ ॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः॥**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

**अन्ये चेति।** अन्येऽपरे सहायत्वेन समाह(ग)ता भगदत्तशल्यप्रभृतयो बहवः शूरा मदर्थे मम विजयसाधनार्थं त्यक्तं जीवितं यैस्ते सर्वे युद्धविशारदा युद्धकुशलाः ॥९॥

सैन्यद्वयपरिकल्पनप्रयोजनमाह—

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

**अपर्याप्तमिति।** तदिति तत्तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभितो रक्षितमप्यस्माकं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति। इदं त्वेतेषां पाण्डवानां बलं भीमेनाभितो रक्षितं सत्पर्याप्तं समर्थं भाति ॥ १० ॥

भीष्मस्योभयपक्षपातित्वादस्मद्बलं पाण्डवसैन्यं प्रत्यसमर्थं भीमस्यैकपक्षपातित्वादेतद्बलमस्मद्बलं प्रति समर्थं तस्माद्भवद्भिरेवं वर्तितव्यमित्याह—

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

**अयनेष्विति** । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां रणभूमिं परित्यज्यावस्थिताः सन्तो भीष्ममेवाभितो रक्षन्तु । यथा तुल्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु । भीष्मबलेनैवास्माकं जीवनमिति भावः ॥ ११ ॥

द्रोणं प्रति राज्ञा भीष्मस्य * च बहुमानपुरःसरं यदुक्तं तच्छ्रुत्वा भीष्मः किमकरोत्तदाह—

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥**

**तस्येति** । कुरुवृद्धः पितामहो भीष्मस्तस्य राज्ञो दुर्योधनस्य हर्षं प्रीतिं संजनयन्नुच्चैर्महान्तं सिंहनादं [ विनद्य ] कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालक्ष्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह—

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

**तत इति** । ततो भीष्मस्य शङ्खपूरणानन्तरम् । शङ्खाश्च परं भेर्यः पणवानकगोमुखाः । पणवा आनका गोमुखा वाद्यविशेषाः सहसैव तत्क्षणमेवाभ्यहन्यन्त वादिताः । स च शङ्खादिशब्दस्तुमुलो महानभवत् ॥ १३ ॥

ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह तत इति पञ्चभिः—

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

ततो दुर्योधनस्य सैन्ये वाद्यकोलाहलानन्तरम् । श्वेतैः शुक्लैः कैलासाचलकल्पैः परसैन्योत्कर्षतनूकरणसामर्थ्यवद्भिः, हयैः । अतिवेगातिरेकात्स्वभावतो वा ह आकाशे यान्तीति हया विशिष्टा अश्वास्तैर्युक्ते संयोजिते महत्यादित्यमण्डलकल्पे पूज्ये स्यन्दने संग्रामभूमिमिद्रवणशीले रथवरे स्थितौ वर्तमानौ । माधवः । मा लक्ष्मीस्तस्या धवः पतिर्माधवः कृष्णः, पाण्डवोऽर्जुनश्चापि । दिव्यौ । दिवि भवौ शङ्खौ प्रदध्मतुः । प्रकर्षेण परकीयवाद्यकोलाहलाभिभवसंपादनेन दध्मतुः आपूरितवन्तौ ॥ १४ ॥

---

* चोऽधिक इव भाति ।

तदेव विभागेन प्रदर्शयन्नाह—

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः॥ १५॥

पाञ्चजन्यमिति। हृषीकाणामिन्द्रियाणामीशोऽधिष्ठाता लीलागृहीतदेहो भगवान्विष्णुः। [ पाञ्चजन्यं ] पञ्चजनाख्यदैत्यदेहोद्भवं धनंजयो देवदत्तं वृकोदरो भीमं घोरं कर्म यस्य सः [ भीमकर्मा ]। महाशङ्खं पौण्ड्रं दध्मौ। आपूरितवान्॥१५॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ॥ १६॥

अनन्तविजयमित्यादियुग्मं पूर्वश्लोकक्रियया संबध्यते। अनन्तेति। कुन्तीपुत्रो युधिष्ठिरो राजा पाण्डवानां स्वामी, अनन्तविजयं महाशङ्खं दध्मौ। यस्य पूरणादनन्तः सततं विजयो भवतीत्यनन्तविजयः। नकुलः सहदेवश्चोभौ सुघोषमणिपुष्पकौ। नकुलः सुघोषं नाम शङ्खं दध्मौ। सहदेवो मणिपुष्पकं च॥ १६॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः॥ १७॥

काश्यश्चेति। च परं काश्यः काशिराजः परमेष्वासः। परम उत्कृष्ट इष्वासो धनुर्यस्य सः। च पुनः शिखण्डी महारथः शिखण्डवान्सकलसुरा[ सुरा ]जेयभीष्मवधार्थमुत्पन्नः पौरुषेयशिखायुक्तश्च परं धृष्टद्युम्नो विराटः सात्यकिः स एवापराजितोऽजेयः। एते सर्वे पृथक्पृथक्शङ्खान्दध्मुर्वादयामासुरिति परेण संबन्धः॥ १७॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक्॥ १८॥

द्रुपद इति। हे पृथिवीपते द्रुपदश्च परं द्रौपदेया द्रौपदीपुत्राश्च परं महाबाहुः सौभद्रः। एते सर्वे प्रत्येकं शङ्खान्दध्मुः॥ १८॥

तस्य शङ्खनादस्य धार्तराष्ट्रान्प्रति × जयभयजनकत्वमाह—

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्॥ १९॥

स घोष इति। स तुमुलो घोरः पाण्डवसेनापतीनां शङ्खादिजनितो घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्। किं कुर्वन्। नभ आकाशं पृथिवीं च व्यनुनादयन्प्रतिशब्दं ( ब्द ) [ युक्तं ] कारयन्॥ १९॥

---

× जयेत्यधिकम्।

तस्मिन्समये श्रीकृष्णं प्रत्यर्जुनेन यदुक्तं तच्चतुर्भिः श्लोकैः संजय आह—

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**

**अथेति** । अथ शङ्खपूरणानन्तरम् । कपिध्वजः पाण्डवो व्यवस्थितान्विशेषेणाव-स्थितान्स्वशङ्खनादाद्घोरतरादप्यपरित्रस्तान्धार्तराष्ट्रान्दृष्ट्वा शस्त्रसंपात उत्तमाहवस्थले च धार्तराष्ट्राणां प्रवृत्ते सति धनुरुद्यम्य सज्जीकृत्य हृषीकेशं प्रति वाक्यमाहेति द्वितीयेनान्वयः ॥ २० ॥

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

**अर्जुन उवाच—**

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

**हृषीकेशमिति** । हे महीपते तदा हृषीकेशमिदं वाक्यमाह । हेऽच्युत मे मम रथमुभयोः सेनयोर्मध्ये मध्यप्रदेशे स्थापय ॥ २१ ॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

**यावदिति** । अहं यावदेतान्प्राधान्याद्वीरान्योद्धुकामानवस्थितान्निरीक्षे निरीक्षण-पूर्वकं परीक्षां करोमि । अस्मिन्रणसमुद्यमे मया कैः सह योद्धव्यं युद्धं कर्तव्यमि-त्यर्थः ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

**योत्स्यमानानिति** । अहं योत्स्यमानानग्रे युद्धं करिष्यमाणानवेक्षे निर्धारयामि य एतेऽत्र मम च पुनस्तव समागमे दुर्बुद्धेरविचारिणो धार्तराष्ट्रस्य दुर्योधनस्य युद्धे युद्धस्थले प्रियचिकीर्षवः प्रियं विजयं कर्तुकामाः समागताः प्रागल्भ्यातिरेकेण सम्य-ग्विरचितसमारम्भेण ऽऽगता अविचारकारिण इत्यर्थः ॥ २३ ॥

ततः किं वृत्तमित्यपेक्षायामाह, एवमिति युग्मेन—

**संजय उवाच—**

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**

हे भारत धृतराष्ट्र गुडाकेशेनार्जुनेनैवं यथावर्णितमुक्तो हृषीकेश उभयोः सेनयो-र्मध्ये रथोत्तमं स्थापयित्वोवाच ॥ २४ ॥

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥**

भीष्मेति । भीष्मद्रोणयोः प्रमुखेऽग्रे तथा सर्वेषां च महीक्षितां भूमण्डलाध्यक्षयो-श्वराणामग्र इत्युवाच । इतीति किम् । हे पार्थैतान्समवेतानस्य (?) द्रष्टुमकुत्स्या निर्दिशति । भीष्मद्रोणकर्णकृपादीन्कुरूनवस्थितान्योधान्पश्येति भगवानुवाच ॥२५॥

ततः किं वृत्तमित्यत आह—

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ।
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥

तत्रेति । अथानन्तरम् । पार्थोऽर्जुनः । तत्रोभयोः [सेनयोः] स्थितान्पितॄन्पिबन्ति चुम्बन्ति लालयन्ति-पर्य(तर्प)यन्त्यपत्यानीति पितरस्तान्पितॄन् । अत्र च पितृकक्ष्याः पितृव्यादयः [संग्राह्याः] । पितामहान्गाङ्गेयादीन् । आचार्यान्द्रोणादीन् । मातुलान्, मात्रा जनन्या साम्यं येषां ते मातुलाः शल्यादयस्तान् । भ्रातॄन्सोदरान् । पुत्रान्पुंना-म्नो नरकात्पितॄणां त्राणात्पुत्रास्तानपश्यत् । श्वशुरानिति । च पुनः श्वशुरान्सुहृदश्चा-पश्यत् ॥ २६ ॥

ततः किं कृतवांस्तदाह—

तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥

तानिति । स कौन्तेयोऽर्जुनः सर्वान्विशेषेण बन्धून् । बध्नन्ति परस्परं स्नेहपाशै-रिति बन्धवस्तानवस्थितान्समीक्ष्य । कृपयेति । कृपया करुणया । परयाऽतिशयि-तयाऽऽविष्टो युक्तो विषीदन्विशेषेण सीदन्नवसादं ग्लानिं लभमान इदमनन्तरमुच्यमान-मब्रवीत् ॥ २७ ॥

किमब्रवीदित्यपेक्षायामाह दृष्ट्वेममित्यादिना यावदध्यायसमाप्ति —

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥

हे कृष्ण, भक्तानां संसारक्लेशविलेखनात्कृष्णः । इमं स्वजनं युयुत्सुं योद्धुकामं सन्तं समुपस्थितमिहाऽऽगतं दृष्ट्वा मम गात्राणि सीदन्तीत्युत्तरेण संबन्धः । सीदन्तीति । हे कृष्ण, इमं स्वजन[मुप]स्थितं दृष्ट्वा मम गात्राण्यङ्गानि सीदन्ति विशीर्णानि शिथिलानि निरुत्साहानि भवन्ति । च पुनर्मुखं परितः समन्ताच्छुष्यति निर्द्रवी भवति ॥ २८ ॥

वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९ ॥

मे मम शरीरे वेपथुः कम्पश्च जायते । तथा रोमहर्षश्च जायते । गाण्डीवमिति । मे मम हस्ताद्गाण्डीवं स्रंसतेऽधः पतति । त्वक्चैव परिदह्यते । आन्तरशोकानलेन संतप्यते ॥ २९ ॥

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥

च परं मे मनः कर्तव्याकर्तव्यबोधसाधनमन्तःकरणं भ्रमतीव भ्रमं गच्छति निर्धारणं कर्तुं न शक्नोति । च पुनरवस्थातुं स्थितिं कर्तुं न शक्नोमि । निमित्तानीति । हे केशव, च पुनर्विपरीतान्यहितसूचकानि निमित्तानि शकुनानि पश्यामि ॥ ३० ॥

न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे ।
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ ३१ ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥

च पुनः । हे कृष्णाहं विजयं विशिष्टं जयं संग्रामोत्कर्षं न काङ्क्षे न प्रार्थये । च पुना राज्यमाधिपत्यं सुखानि च विषयजन्यान्प्रमोदान्न प्रार्थये । हे गोविन्द, नोऽस्माकं राज्येन किं, भोगैर्विषयसुखैः किं, जीवितेनापि किम् । गोभिः श्रुतिभिर्वेदान्तवाक्यैर्विद्यते परमार्थरूपेण लभ्यत इति गोविन्दः ॥ ३१ ॥ ३२ ॥

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥

येषामर्थ इति । येषां स्वजनानामर्थे प्रयोजनाय नोऽस्माकं राज्यं भोगाश्च पुनः सुखान्येतत्सर्वं काङ्क्षितं वाञ्छितं त इमे युद्धे युद्धनिमित्तं प्राणानान्तरप्राणान्धनानि बाह्यप्राणांश्च त्यक्त्वाऽवस्थिताः ॥ ३३ ।

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥

आचार्या इति । आचार्यादयो यथाव्याख्याताः । पितरः पुत्रास्तथा पितामहा मातुलाः श्वशुराः पौत्राः श्यालाः पत्न्या भ्रातरः । स्वस्य संबन्धिनो विवाहादिसंबन्धवन्तः ॥ ३४ ॥

यदि कृपया त्वमेतान्न हन्यास्तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येवातस्त्वमेवैतान्हत्वा राज्यं भुङ्क्ष्व तत्राऽऽह सार्धेन—

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३५ ॥

एतानिति। हे मधुसूदनैतानाचार्यादीन्घ्नतोऽप्यस्मान्घातयतोऽपि त्रैलोक्यराज्यस्यापि हेतोस्तत्प्राप्त्यर्थमपि हन्तुं नेच्छामि। किं पुनर्महीमात्रप्राप्त्यर्थम्। निहत्येति। हे जनार्दन, देवविपक्षभूतानसुरादीञ्जनानर्दयति पीडयतीति जनार्दनः। अथवा जनैरधिकारिपुरुषैरभ्युदयादिकं प्रार्थ्यत इति जनार्दनः। धार्तराष्ट्रान्निहत्य हत्वा नोऽस्माकं का प्रीतिः स्यात्किं सुखं स्यान्न किमपीत्यर्थः॥ ३५॥

नन्वाततायिनामेषां वधो युक्तो विहितत्वात्तथा चोक्तम्—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारापहर्ता च षडेते आततायिनः॥ इति।

एवमेषा( तस्मा )दग्निदत्वादिभिः षड्भिरपि हेतुभिरेते भवत आततायिनः। आततायिनां वधो युक्त एव।

आततायिनमायान्तं हन्यादेवाविचारयन्।
नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन॥

इति वचनात्तत्राऽऽह सार्धेन—

पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः॥ ३६॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान्।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव॥ ३७॥

पापमिति। आततायिनमायान्तमित्यादिकमर्थशास्त्रं हि तच्च धर्मशास्त्राद्दुर्बलम्। यथोक्तं याज्ञवल्क्येन—

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति [ स्थितम् ]॥

स ( त ) स्मादाततायिनां मध्ये तेषामाचार्यादीनां वधेऽस्माकं पापमेव भवेत्। अन्याय्यत्वादधर्मत्वाच्च तद्वधस्य। हे माधव, हि यस्मादेतेषां हनने लोकद्वयेऽप्यकल्याणमेव तस्मात्स्वबान्धवान्धार्तराष्ट्रान्हन्तुं वयं नार्हा न योग्याः। एतेषां वधस्यान्याय्यत्वादधर्मत्वाच्च, न केवलमस्माकं पारलौकिकं सुखं न भवत्यैहिकमपि न भवतीत्याह—स्वजनं हीति। हि यस्मात्स्वजनं हत्वा वयं सुखिनः कथं स्याम कथं सुखयुक्ता भवाम॥ ३६॥ ३७॥

ननु चैतेषामपि बन्धुवधदोषे समाने सति यथैवैते बन्धुवधानङ्गीकारेण युद्धे प्रवर्तन्ते तथैव भवानपि प्रवर्तताम्। किमनेन विषादेनेत्याशङ्क्याविवेकिविवेकिभेदेन परिहरति—

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्॥ ३८॥

यद्यपीति । हे कृष्ण, यद्यप्येते धार्तराष्ट्रा लोभोपहतचेतसः । [ लोभः ] परद्रव्याद्यभिलाषः । लुनाति नाशयति लोकद्वयं प्राणिनामिति लोभस्तेनोपहतचेतसश्चिरकृताकर्तव्याकर्तव्यविवेकविज्ञानाः सन्तः कुलक्षयकृतं गोत्रवधनिमित्तदोषं मित्रद्रोहे च पातकं न पश्यन्ति ॥ ३८ ॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥

कथमिति । हे जनार्दन, तथाऽप्यस्माभिः कुलक्षयकृतं दोषं प्रपश्यद्भिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् । कथं न यत्नः कर्तव्यः ॥ ३९ ॥

कुलक्षये कृते दोष उत्पद्यते तं दोषं कथयति—

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥

कुलक्षय इति । कुलक्षये गोत्रपुरुषाणां विनाशे सनातनाः पारम्पर्यागताश्चिरंतनाः कुलधर्माः प्रणश्यन्ति । धर्मे नष्टे कृत्स्नमपि कुलमधर्मोऽभिभवति तिरस्करोति । उतापि । अधर्माभिभवनिवारकधर्मस्याभावादित्यर्थः ॥ ४० ॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥

अधर्मेति । हे कृष्ण,धर्माभिभवात्कुलस्त्रियो विशुद्धवंशोद्भवाः प्रदुष्यन्ति स्वैरिण्यो भवन्ति । तासु स्त्रीषु दुष्टासु वार्ष्णेय वृष्णिवंशोद्भव, वर्णसंकरो जायते । वर्णस्य वर्णान्तरामिश्रीकरणं संकरः ॥ ४१ ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥

संकर इति । ( * संकराज्जायतेति ) संकर एषां कुलघ्नानां चापरं कुलस्यैव नरकाय भवतीति । हि यस्मादेषां कुलघ्नानां कुलहन्तॄणाम् । न केवलं तेषां कुलस्यैव नरकाय भवति, किंत्वेषां कुलघ्नानां स्वर्गारूढाः पितरो लुप्तपिण्डोदकक्रियाः सन्तः पतन्तीत्यर्थः ॥ ४२ ॥

उक्तदोषमुपसंहरति दोषैरिति द्वाभ्याम्—

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥

एतैर्धर्मनाशाधर्माभिभवादिलक्षणैर्वर्णसंकरकारकैर्दोषैः कुलघ्नानां जातिधर्माः क्षात्र-

---

* धनुश्चिह्नान्तर्गतमधिकमिव भाति ।

धर्मानुक्त्वा धर्मास्तथा शाश्वताः कुलधर्माः पारम्पर्यागता वंशधर्मा उत्साद्यन्ते लुप्यन्ते । तेषामाचरणं न भवति । चकाराद्आश्रमधर्मादयो गृह्यन्ते ॥ ४३ ॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

उत्सन्नेति । भो जनार्दन, उत्सन्नकुलधर्माणां विनष्टकुलवर्णाश्रमादिधर्माणां मनुष्याणां नरके नियतं नियमेन वासो भवतीत्यनु वारंवारं व्यासादिभ्यः शुश्रुम श्रुतवन्तो वयम् ॥ ४४ ॥

बन्धुवधाध्यवसायेन संतप्यमानतयाऽऽह—

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥

अहो बतेति । अहो बत कष्टं यत्परमेश्वरस्य तव संनिधानेऽपि वयं महत्पापं कर्तुं व्यवसिता व्यवसायं निश्चयं गताः । किं तन्महत्पापं कर्तुम् । यद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः । उदतिशयेन यत्नवन्तो यताः ॥ ४५ ॥

एवं संतप्तो मृत्युमेवाऽऽशासानोऽर्जुन आह—

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

यदीति । यदि शस्त्रपाणयो धार्तराष्ट्रा अप्रतीकारं प्रतियुद्धमकुर्वाणं मामशस्त्रं रणे संग्रामे हन्युर्हनिष्यन्ति चेत्तर्हि तद्धननं मे मम क्षेमतरं पापस्यानुत्पत्तेर्हेतोरत्यन्तं हिततरं भवेत् ॥ ४६ ॥

ततः किं वृत्तमित्यपेक्षायामाह—

संजय उवाच—

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जु-
नसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

---

एवमिति । अर्जुन एवमुक्त्वा संख्ये संग्रामे रथोपस्थे रथस्योपर्युपाविशत्,

उपविवेश । किं कृत्वा सशरं शरेण बाणेन सह वर्तमानं धनुर्विसृज्य । शोकसंविग्नमानसः शोकेन संविग्नं मानसं यस्य स एवंविधः सन्नुपविष्ट इत्यर्थः ॥ ४७ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

ततः किं वृत्तमित्यपेक्षायामाह—

संजय उवाच—

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

तमिति । मधुसूदनः श्रीकृष्णस्तमर्जुनं तथा तेन प्रकारेण कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणं विषीदन्तं पूर्वोक्तप्रकारेण विषादं प्राप्तवन्तं प्रतीदं वक्ष्यमाणमुवाच ॥ १ ॥

तदेव वाक्यं दर्शयति कुत इति द्वाभ्याम्—

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

हेऽर्जुनेदं कश्मलं मोहकलुषं विषमे संकटे त्वां कुतो हेतोः समुपस्थितमनार्यजुष्टमार्यैरसेवितमस्वर्ग्यं स्वर्गस्यासाधनमकीर्तिकरमयशस्करम् ॥ २ ॥

तस्माद्यत्कर्तव्यं तदाह—

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

क्लैब्यमिति । हे पार्थ, क्लैब्यं मा स्म गमः कातर्यं मा प्राप्नुहि । त्वयि विषम एतन्नोपपद्यते युक्तं न भवति । हे परंतप, क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्यं त्यक्त्वोत्तिष्ठ ॥ ३ ॥

अहं न कातरतया युद्धादुपरतोऽस्मि किंतु युद्धस्यान्याय्यत्वादिति [ प्रतिवचनमाह ]—

अर्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

कथमिति। हेऽरिसूदनाहं संग्रामे भीष्मं च पुनर्द्रोणमिषुभिः कथं योत्स्यामि। यौ भीष्मद्रोणौ प्रति वाचाऽपि योत्स्यामीति वक्तुमनुचितं ताविषुभिः कथं योत्स्यामीत्यर्थः। यतस्तौ पूजार्हौ ॥ ४ ॥

तर्हि तव स्थितिरपि न स्यादिति चेत्तत्राऽऽह—

गुरूनहत्वा हि महानुभावा-
ञ्छ्रेयो भोक्तुं भैक्षमपीह लोके ॥
हत्वाऽर्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥

गुरूनिति। हि यस्माद्गुरूनहत्वा। गुरवः शास्त्रोपदेष्टारो गुरुत्ववृत्त्या।

प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा।
देशभाषादिभिः शिष्यं बोधयेत्स गुरुः स्मृतः ॥

इत्युक्तत्वादन्येऽपि तत्तुल्या जनकादयस्तेऽपि गुरवस्तान्महानुभावान्द्रोणादीन्गुरूनहत्वा परलोकविरुद्धं गुरुवधमकृत्वेह लोके भैक्ष्यं(क्षं) भिक्षामात्रमपि भोक्तुं श्रेय उचितम्। न केवलं परत्र दुःखमिहापि नरकदुःखमनुभवितव्यमित्याह—हत्वेति। तु पुनरर्थकामानर्था(र्थोऽ)भिलाषस्तत्परान्नाऽऽप्तकामान्गुरून्हत्वेहास्मिन्नेव शरीरे गुरूणां रुधिरेण प्रदिग्धान्प्रकर्षेण लिप्तान्मरणानन्तरं नरके भोक्तव्यान्भोगाञ्जीवन्नेवाहं कथं भुञ्जीय भोक्ष्यामीत्यर्थः ॥ ५ ॥

किंच यद्यधर्ममप्यङ्गीकरिष्यामस्तथाऽप्यस्माकं जयः पराजयो वा भवेदिति न ज्ञायते। अपि च तयोः कतरच्छ्रेयः, [ इत्याह ]—

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

न चैतदिति। च पुनरेतद्द्वयं न विद्मो न जानामि(नीमः), नोऽस्माकं कतरत्किं नाम गुरूणां हननं वाऽहननं गरीयः किमधिकतरं भविष्यतीति न विद्मः। यद्वैतान्वयं जयेम जेष्यामो यदि वा नोऽस्मानेव ते जयेयुर्जेष्यन्तीति न विद्मः। किंचास्माकं जयोऽपि फलतः पराजय एवेत्याह – यानेवेति। किंच जयपक्षेऽपि जयप्रवृत्तिरस्माकं न युक्ता, यस्माद्यानेव धार्तराष्ट्रान्हत्वा वयं न जिजीविषामो न

जीवितुमिच्छामः । एवं [ च ] राज्यादिभोगस्य शङ्काऽपि का । त एव धार्तराष्ट्राः प्रमुखेऽग्रे युद्धार्थमवस्थिता वर्तन्ते ॥ ६ ॥

तस्मात्संशयानो निर्णेतुं पृच्छति—

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

कार्पण्येति । एतान्हत्वा कथं जीविष्याम इति कार्पण्यं दोषश्चास्य कुलस्य क्षयकृतस्ताभ्यामुपहतः स्वभावः शौर्यलक्षणो यस्य सोऽहं कार्पण्यदोषोपहतस्वभावः । अथवा कृपणस्य भावः कार्पण्यं दैन्यमज्ञाननिमित्तं तदेव दोषस्तेनोपहतः स्वभावो यस्य स त्वां पृच्छामि । कथंभूतः । धर्मसंमूढचेताः । धर्मे संमूढं चेतो यस्य । विवेकविज्ञानानुदयात् । अथवा धर्मसंमूढचेताः युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मोऽधर्मो वेति संदिग्धं चेतश्चित्तं यस्य सोऽहं धर्मसंमूढचेताः । अतो यन्मे श्रेयो हितं स्यात्तन्निश्चितं ब्रूहि । किंच ते तवाहं शिष्यः शासनार्होऽतस्त्वां प्रपन्नं शरणमागतं मां शाधि शिक्षय ॥ ७ ॥

त्वमेव विचारवान्यद्युक्तं तत्कुर्विति चेत्तत्राऽऽह—

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाऽऽधिपत्यम् ॥ ८ ॥

न हीति । क्षत्रियाणां युद्धं स्वधर्मप्रदं तदेव निश्चयेन कर्तव्यमिति भ[ग]वदुपदेशं स्वयमेवाऽऽशङ्क्याऽऽह । युद्धे क्रियमाणे जयस्तावत्पाक्षिकः । निश्चयपक्षेऽपि युद्धफलं भूमौ राज्यं तच्चासपत्नं निष्कण्टकं च । तदवाप्यापि यन्मम शोकं मदीयं यत्कर्मापनुद्यादपनयेत्तदहं न हि प्रपश्यामि । किंविशिष्टं शोकम् । इन्द्रियाणामुच्छोषणमिति शोषकरम् । न केवलं भूमौ राज्यं शोकाविच्छेदकरं [न] भवति, सुराणामप्याधिपत्यं युद्धे मरणपक्षे प्राप्तमिति(मपि) जन्मान्तरेऽपि स्वजनवधनिमित्तशोकशान्तिं न पश्यामीत्यर्थः । भूमावसपत्नमृद्धं राज्यं चापरं सुराणामप्याधिपत्यमवाप्य यत्कर्म कृतं तन्ममेन्द्रियाणामुच्छोषणं शोकमपनुद्यादपनयेत्तन्न हि प्रपश्यामीत्यन्वयः ॥ ८ ॥

एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायामाह—

संजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

एवमिति। गुडाकेशोऽर्जुनो हृषीकेशं श्रीकृष्णं प्रत्येवं पूर्वोक्तप्रकारेण कथं भीष्ममहं संख्ये योत्स्यामीत्यादि हे परंतप हे धृतराष्ट्राहं न योत्स्ये युद्धं न करिष्यामीति गोविन्दं प्रत्युक्त्वा तूष्णीं बभूव मौनमाश्रितवान्॥ ९॥

ततः किं वृत्तमित्यपेक्षायामाह—

तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः॥ १०॥

तमिति। हे भारत हृषीकेशः श्रीनारायणः प्रसन्नवदनः सन्नुभयोः सेनयोर्मध्ये विषीदन्तं विषादं कुर्वन्तमर्जुनं प्रतीदं वक्ष्यमाणं वचो वाक्यमुवाच।

अत्र[1] च दृष्ट्वा तु पाण्डवानीकमित्यारभ्य[2] न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव हेत्येवमन्तो ग्रन्थः प्राणिनां शोकमोहबहुलः संसारोऽविद्यामूल इतिप्रदर्शनार्थत्वेन व्याख्येयः॥ १०॥

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥ ११॥

अशोच्या न शोच्या भीष्मद्रोणादयः। धार्मिकत्वाद्वस्तुतश्च परमात्मस्वरूपत्वात्। अन्वशोचोऽनुशोचितवांस्त्वम्। प्रज्ञा परमात्मज्ञानं तन्निमित्तांश्च वादान्वचनानीह भाषसे। गता असवः प्राणा येषां ते गतासवस्तानगतासूनगतप्राणांश्च पण्डिता परमार्थविदो नानुशोचन्ति। अतो मूढस्त्वं प्रज्ञा परमा कुतस्ते॥ ११॥

कुतस्तेऽशोच्या जन्ममरणादिमत्त्वा(त्त्व)भावा[3]दत आह—

न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्॥ १२॥

न त्विति। जातुशब्दः कदाचिदित्येतस्मिन्नर्थे वर्तते। नाहं कदाचिन्नाऽऽसमपि त्वासमेव। न त्वं नाऽऽसीरासीरेवेत्यर्थः। नेमे भीष्मादयो नाऽऽसन्किं त्वासन्नेव। न चैव न भविष्यामः सर्वे वयमतः परम्। त्वमहमिमे राजानश्च सर्वे वयं जातु न न भविष्यामोऽपि तु भविष्याम एव। अतीतेषु देहोत्पत्तिविनाशेषु सर्वेषामेवास्माकमुत्पत्तिविनाशौ न स्तः। परमात्मस्वरूपेण नित्यत्वात्। तथा भविष्यद्देहोत्पत्तिविनाशशङ्का न कर्तव्येत्यर्थः। बहुवचनं देहाभिप्रायेण। बहुदेहेषु जायमानेषु विनश्यत्सु चाऽऽत्मनो जन्मविनाशौ न स्त इत्युक्तं भवति॥ १२॥

---

१ क. ख. ग. ङ. °त्र ह°। २ क. ख. घ. ङ. °भ्य यावन्न यो°। ३ घ. °यः। कालात्मक°।

३

अत्रोचितं दृष्टान्तमाह—

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

देहिनो देहवतोऽस्मिन्वर्तमाने देहे यथा कौमारं कुमारभावो यौवनं यूनो भावो जरा वृद्धत्वं तथा तद्वद्देहान्तरप्राप्तिः । धीरो धीमांस्तत्र न मुह्यति न मोहं गच्छति । यथाऽस्मिन्देहे कौमारयौवनजरास्वात्मनोऽभेद एव भिन्नाः शरीरावस्था एवं शरीरान्तराणीत्यर्थः ॥ १३ ॥

यद्यप्यात्मनाशनिमित्तः शोको न संभवति नित्य आत्मेति जानतस्तथाऽपि शीतोष्णनिमित्तः शोकः संभवतीत्येतदर्जुनस्य वचनमाशङ्क्याऽऽह—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

मात्रास्पर्शास्त्विति । मीयन्त आभिः शब्दादय इति मात्रा इन्द्रियाणि, मात्राणां स्पर्शाः शब्दादिभिः संयोगाः । शीतोष्णसुखदुःखदाः शीतं चोष्णं च शीतोष्णे ते एव सुखदुःखे ते ददतीति शीतोष्णसुखदुःखदाः । आगमापायिन आगमापायशीलास्तस्मादनित्यास्तान्मात्रास्पर्शांस्तितिक्षस्व प्रसहस्व तेषु हर्षविषादौ मा कार्षीरित्यर्थः ॥ १४ ॥

मात्रास्पर्शान्सहमानस्य किं स्यादित्यत्राऽऽह—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

यं हि न व्यथयन्तीत्यादि । यं हि पुरुषं न व्यथयन्ति न चालयन्त्येते मात्रास्पर्शाः समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं सोऽमृतत्वायामृतभावाय मोक्षायेत्यर्थः । कल्पते समर्थो भवति ॥ १५ ॥

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं, यस्मादुक्तम्—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

नासत इत्यादि । असतोऽविद्यमानस्य रज्जुसर्पवद्दृष्टनष्टस्वभावस्य जगतो भावः सत्ता न विद्यते । तथा परमार्थस्य सत आत्मनोऽभावोऽविद्यमानता न विद्यते । सर्वत्राव्यभिचारात् । अनयोः सदसतोर्दृष्ट उपलब्धोऽन्तो निश्चयस्तत्त्वदर्शिभिरात्मदर्शिभिरित्यर्थः । तस्मात्तत्त्वदर्शिना दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादींस्तितिक्षस्वेत्यभिप्रायः ॥ १६ ॥

---

१ ख. °ष्णादि तिति° ।

किं पुनस्तद्यदेव सर्वदा सदेवेत्युच्यते—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥ १७॥

अविनाशीति। विनष्टुं शीलमस्येति विनाशि। न विनाश्यविनाशि। तुशब्दोऽसतो विशेषणार्थः। तद्विद्धि जानीहि। येन सर्वमिदं जगद्व्याप्तमाकाशेनेव। विनाशमदर्शनं घटादिवदस्याव्ययस्य ब्रह्मणो विनाशं कर्तुं नार्हति, न कश्चिदात्मानं विनाशयितुं शक्नोति॥ १७॥

किं पुनस्तदसद्यत्स्वात्मसत्तां व्यभिचरतीत्युच्यते—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥ १८॥

अन्तो नाशो विद्यते येषां तेऽन्तवन्तः। * नित्यस्य शरीरिणो यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणाद्विच्छिद्यते स तस्यान्तस्तथेमे देहाः स्वप्नमायादेहादिवदन्तवन्तः। नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्याऽऽत्मनोऽन्तवन्त इत्युक्ताः पण्डितैर्ब्रह्मवादिभिरित्यर्थः। अप्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्य न त्वात्मा परिच्छिद्यते। तथा च श्रुतिः—यत्साक्षादपरोक्षाद्ब्रह्माऽऽत्मेति। यस्मादेवं नित्यः सन्नविच्छेद्यश्चाऽऽत्मा तस्माद्युध्यस्व। तदुपरमं मा कार्षीरित्यर्थः। नह्यत्र युद्धकर्तव्यता विधीयते। युद्धे प्रवृत्त एवासौ मोहप्रतिबन्धतस्तूष्णीमास्ते तस्य प्रतिबन्धापनयनं भगवता क्रियते। तस्माद्युध्यस्वेत्यनुवादमात्रं न विधिः॥ १८॥

शोकमोहादिसंसारसागरनिवृत्त्यर्थं गीताशास्त्रं प्रवर्तत इत्येतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान्। यत्तु मन्यसे युद्धे भीष्मादयो हन्यन्तेऽहमेषां हन्तेति। एषा बुद्धिर्मृषैव सा ते। कथम्—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ १९॥

य एनं प्रकृतं देहिनं वेत्ति हन्तारं यश्चैनं मन्यते हतं देहहननेन हतोऽयमिति हननक्रियायाः कर्मभूतमात्मानं तावुभौ न विजानीतोऽविवेकेनाऽऽत्मानमहंप्रत्ययविषयं तावुभावात्मस्वरूपानभिज्ञावित्यर्थः। यस्मान्नायमात्मा हन्ति हननक्रियाया न कर्ता न हन्यते न च कर्म भवतीत्यर्थः। अविक्रियत्वात्॥ १९॥

---

* इदं पदद्वयमाधिकम्।

---

१ ख. सदित्यु॰। २ क. ख. घ. ङ. नास्तीति। ३ ङ. ॰बद्धस्तु॰। ४ क. ख. ग. ङ. ॰यं यौ विजानीतस्तावु॰। ५ क. ख. घ. ङ. ॰वुभौ चाऽऽत्म॰।

कथमविक्रिय आत्मेति द्वितीयो मन्त्रः—

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

न जायते नोत्पद्यते जननस्य न कर्ता । जनिलक्षणवस्तुविक्रियाऽऽत्मनो न विद्यत इत्यर्थः । तथाऽयं न म्रियते वा कदाचिदुत्पत्तिक्रियायाः सत्तां नानुभवति । उत्पत्तेः सत्तानुभवस्य मरणाव्यभिचारात् । (*उत्पत्तेः स नोत्पद्यते जननस्य न कर्ता जननलक्षणा वस्तुविक्रिया न विद्यते) । उत्पत्तेः सत्तामननुभवन्न म्रियत इत्युच्यते । अतोऽस्तिलक्षणा भावविक्रियाऽऽत्मनो न विद्यत इत्यर्थः । वाशब्दश्चार्थे । कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते । न कदाचिज्जायते न कदाचिन्म्रियत इति सर्वत्र योज्यम् । अयं भूत्वा भविता वा न भूयः । अयमात्मा भूत्वोत्पत्तिक्रियामनुभूय भूयो भविता न । अवस्थान्तरं प्राप्यावस्थान्तरं न प्राप्नोति । न विपरिणमत इत्यर्थः । विपरिणामलक्षणा भावविक्रियाऽऽत्मनो न विद्यत इत्यर्थः । अजोऽवयवोपचयरूपेण नोपचीयते, वृद्धिलक्षणा भावविक्रिया न विद्यत इत्यर्थः । अतो नित्यः । अपक्षयलक्षणा भाव[वि]क्रियाऽऽत्मनो न विद्यत इत्यर्थः । शश्वद्भवः शाश्वतः । अविनाशीत्यर्थः । अतः पुराणः पुराऽपि नवः पुराणः सदैकरूप इत्यर्थः । तस्मान्न हन्यते न विक्रियते हन्यमाने विक्रियमाणेऽपि शरीरे । अस्मिन्मन्त्रे षड्भावविकारा लौकिका वस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य संबन्धः ॥ २० ॥

य एनं वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय न जायत इत्यनेनाविक्रियत्वं हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

वेदाविनाशिनमिति । वेद विजानाति । अविनाशिनं[2] प्रेत्यभावविकाररहितम् । नित्यं विपरिणामरहितं यो वेदेति संबन्धः । एनं पूर्वोक्तमन्त्रेणोक्तलक्षणम[1] । अजं जननक्रियारहितम् । अव्ययमपक्षयरहितम् । कथं केन प्रकारेण । स विद्वान्पुरुषोऽ-

---

* धनुश्चिह्नान्तर्गतमधिकं भाति ।

---

१ ख. °र्ण न । २ ख. ग. घ. ङ. °शिनमस्य भा° ।

विक्रतो हन्ति हननक्रियां करोति कथं वा घातयति हन्तारं प्रयोजयति न कथंचिद्धन्ति न कथंचिद्घातयति। उभयत्राऽऽक्षेप एवार्थः। प्रश्नासंभवात्। हेत्वर्थस्य तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिहितो भगवता। हन्तेस्त्वाक्षेप उदाहरणार्थत्वेनोक्तः। विदुषः सर्वकर्मासंभवे कं हेतुविशेषं पश्यन्कर्माण्याक्षिपति भगवान्कथं स पुरुष इति ॥ २१ ॥

आत्मनो नित्यत्वं प्रतिज्ञातं तत्कथं शरीरेषु नश्यत्स्वित्यत्राऽऽह—

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ॥ २२ ॥**

वासांसीति। यथा नरो जीर्णानि वासांसि विहाय नवानि वस्त्राणि गृह्णाति स्वयं विद्यमान एव तथा जीर्णानि शरीराणि [ विहायान्यानि नवानि ] संयाति देही स्वयं पूर्वदेहविनाशेऽप्यविक्रियो विनाशरहितः ॥ २२ ॥

कथं पूर्वं न विक्रियत इत्युक्तमत आह—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**

नैनं छिन्दन्तीति। एनं प्रकृतं देहिनं न च्छिन्दन्ति निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राणि वास्यादीनि। तथा नैनं दहति पावकः। अग्निरपि न भस्मी करोति। तथा च नैनं क्लेदयन्त्यापः। अपां हि सावयववस्तुन्यार्द्रभावकरणेनावयवविश्लेषणापादने सामर्थ्यं न निरवयव आत्मनि संभवति। तथा स्नेहद्रव्यं स्नेहशोषणेन शोषयति वायुः। एवं चाऽऽत्मानमस्नेहवन्तं न शोषयति मारुतोऽपि ॥ २३ ॥

यत एवं तस्मात्—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

अ[च्छेद्य इत्यादि। यस्माद]न्यनाशहेतुभूतान्यात्मानं नाशयितुं नोत्सहन्ते तस्मान्नित्योऽयं नित्यत्वात्सर्वगतः सर्वगतत्वात्स्थाणुरिव स्थितः स्थितत्वादचलोऽयमात्माऽतः सनातनश्चिरंतनो न कारणात्कुतश्चिन्निष्पन्नोऽभिनव इत्यर्थः। कथं नु नाम संसारिणां बुद्धिगोचरतामापन्नः संसारनिवृत्तये स्यादिति पुनः पुनरुच्यते ॥ २४ ॥

किंच—

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

अव्यक्तोऽयमिति । सर्वेन्द्रियाविषयत्वान्न व्यज्यत इत्यव्यक्तः । अव्यक्तोऽयमात्माऽत एवाचिन्त्योऽयम् । य इन्द्रियगोचरः स विषयत्वमापद्यते । अयं त्वात्मा निरिन्द्रियगोचरत्वादचिन्त्यः । अविकार्योऽयम् । यथा क्षीरं दध्यातञ्चनादिना [विक्रियते] न तथाऽऽत्मा । [किं तु] निरवयत्वादविक्रियः । न हि निरवयवं विक्रियात्मकं च वस्तु दृष्टम् । [अतोऽ]विक्रियत्वादविकार्योऽयमात्मोच्यते । तस्मादेवं यथोक्तप्रकारमेनमात्मानं विदित्वा नानुशोचितुमर्हसि हन्ताऽहमेषां मयेमे हन्यन्त इति ॥२५॥

आत्मनस्तु हननमभ्युपगम्यैतदुच्यते—

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥

अथ चैनमिति । अथ चेत्यभ्युपगमार्थम् । प्रकृतमेनं नित्यजातं लोकप्रसिद्ध्या नित्यं जातो नित्यजातो नित्यं वा मन्यसे मृतं तथाऽप्येवमपि त्वं महाबाहो, एनमात्मानं शोचितुं नार्हसि । जननमरणयोरस्य स्वाभाविकत्वात् ॥ २६ ॥

तदेव दर्शयति—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

जातस्येति । जन्मवतो नाशो नाशवतो जन्म स्वाभाविकश्चेदपरिहार्योऽयम् । तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

कार्यकारणधर्मकान्य(ण्य)प्येतान्युद्दिश्य शोको न युक्तः कर्तुं, यतः—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

अव्यक्तादीनीति । अव्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां तान्यव्यक्तादीनि प्रागुत्पत्तेः । उत्पन्नानि च प्राग्विनाशाद्व्यक्तमध्यानि व्यक्तान्तरालानि । अव्यक्तनिधनान्येवं पुनरप्य[व्यक्तम]दर्शनं मरणं येषां तान्यव्यक्तनिधनानि । मरणादूर्ध्वमव्यक्तमेव प्रतिपद्यन्त इत्यर्थः । तथा चोक्तम्—“ अदर्शनादिहाऽऽयातः पुनश्चादर्शनं गतः ” इति । तत्र का परिदेवना को वा विलापः । दृष्टनष्टभ्रान्तिभूतेषु भूतेष्विवेत्यर्थः ॥ २८ ॥

दुर्बोधोऽयं प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते, कथं दुर्विज्ञेय आत्मेति तत्राऽऽह—

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।

---

१ क. ग. घ. ङ. °यवत्वं वि° । २ ख. ग. ङ. °त्मकत्वं च । ३ क. ख. ग. ङ. °व पुनः पु° । ४ क. ग. घ. ङ. विप्रलापः ।

आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥

आश्चर्यवदिति । आश्चर्यवदाश्चर्यमद्भुतम् । स्वार्थे वतिप्रत्ययः । आश्चर्यमेवाऽऽश्चर्यवदृष्टमननुभूतमकस्माद्दृश्यमानमाश्चर्यमेनमात्मानं कश्चित्पश्यतीत्याश्चर्यम् । तथैवैनमात्मानमन्यः कश्चिद्वदतीत्येतदाश्चर्यम् । श्रुत्वा दृष्ट्वोक्त्वाऽप्येनं न च वेदेत्याश्चर्यमतो दुर्बोध आत्मेत्यभिप्रायः ॥ २९ ॥

अथेदानीं प्रकरणमुपसंह्रियते—

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

परमार्थतत्त्वापेक्षया शोकमोहौ न संभवत इत्युक्तम् । न(किं) केवलं परमार्थतत्त्वापेक्षया शोकमोहयोरकर्तव्यता साध्यते तत्राऽऽह—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥

स्वधर्ममपि स्वधर्मः क्षत्रियस्य युद्धं तदप्यवेक्ष्य त्वं विकम्पितुं नार्हसि प्रचालितुं नार्हसि । स्वाभाविकाद्युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते । हि यस्मात् ॥ ३१ ॥

इतश्च युद्धं कर्तव्यमित्युच्यते—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

यदृच्छया चोपपन्नमागतं कर्तव्यतया प्राप्तमपि ॥ ३२ ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

धर्म्यं धर्मा[द]नपेतम् ॥ ३३ ॥

न केवलं स्वधर्मकीर्तिपरित्यागः—

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

संभावितस्य धर्मात्मा शूर इत्यादिगुणैः संभावितस्याकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

---

१ क. ड. अतश्च ।

भयात्कर्णादिभी रणाद्युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः। के मंस्यन्त इत्यत्राऽऽह—येषां च दुर्योधनादीनां त्वं बहुमतो भूत्वा पुनर्यास्यसि लाघवं लघुभावं ते मंस्यन्ते ॥ ३५ ॥

किंच—

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

अवाच्यवादानव्यक्तवादांश्च बहूननेकप्रकारान्वदिष्यन्ति तवाहिताः शत्रवो निन्दन्तः कुत्सयन्तस्तव सामर्थ्यं निवातकवचादिजयसामर्थ्यनिमित्तम्। ततस्तस्मान्निन्दाप्राप्तेर्दुःखतरं नु किम्। ततः कष्टतरं नास्तीत्यर्थः ॥ ३६ ॥

युद्धे पुनः कर्णादिभिः क्रियमाणे—

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

हतो वेति। जित्वा कर्णादीन्भोक्ष्यसे महीम्। उभयथाऽपि ते लाभ इत्यभिप्रायः। यत एवं तस्मादुत्तिष्ठ कौन्तेय। कृतनिश्चयो जेष्यामि परान्मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

ततः स्वधर्म इत्येव युध्यस्व। उपदेशमिमं शृणु—सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ च समौ कृत्वेति। एष उपदेशः प्ररोचनार्थः प्रासङ्गिकः ॥ ३८ ॥

शोकापनये लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो न तात्पर्येण। परमार्थदर्शनमिह प्रोक्तं(प्रकृतं), तच्चोक्तमुपसंहरति—

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

एषा ते तुभ्यमभिहितोक्ता सांख्ये परमात्मवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसारनिवृत्तिकारणम्। योगे तत्प्राप्त्युपाये निःसङ्गतया द्वंद्वप्रहरणपूर्वकमीश्वराराधनार्थे कर्मानुष्ठाने समाधियोगे चेमामनन्तरं मयोच्यमानां बुद्धिं शृणु। तां बुद्धिं स्तौति श्रोतॄणां प्ररोचनार्थम्। बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्मैव धर्माधर्माख्यं बन्धस्तं प्रहास्यसि। ईश्वरप्राप्तिनिमित्तज्ञानं प्राप्स्यसीत्यभिप्रायः ॥ ३९ ॥

किंच—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

इह मोक्षमार्गेऽभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तन्नाशो नास्ति । यथा कृष्यादेः, मोक्षविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः । किंच चिकित्सावत्प्रत्यवायो न विद्यते, किं तु भवति । स्वल्पमप्यस्य धर्मस्य मोक्षसाधनानुष्ठितं त्रायते रक्षति संसारभयाज्जन्ममरणादिलक्षणात् ॥ ४० ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

व्यवसायात्मिका निश्चयात्मिका बुद्धिः सांख्ययोगे व्यवसायिनां पुरुषार्थसाधिका । अव्यवसायिनां बुद्धयो बहुशाखा बहुस्कन्धा अनन्ताश्च भवन्ति । न ताः पुरुषार्थं प्रति साधनमित्यभिप्रायः ॥ ४१ ॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ४२ ॥

यामिमां वैदिकीं वेदभवां द्रव्यगुणकर्मणां स्वर्गादिफलोत्पादनसमर्थानां फलपूर्वभावित्वात्पुष्पमिव पुष्पं तानि च पुष्पितानि । एषां पुष्पितानां प्रतिपादिका वागपि पुष्पिता । तां वाचं वदन्ति पठन्त्यविपश्चितोऽपण्डिता वेदस्य वादो वदनं वेदवादस्तत्र रताः सक्ता वेदवादरताः । वेदवाक्यप्रतिपादितस्वर्गादिफलाशापाशबद्धा इत्यर्थः । स्वर्गादिफलादन्यदपवर्गाख्यं सुखं नास्तीतिवादिनो वदनशीलाः ॥ ४२ ॥

कथंभूतास्तेऽविपश्चित इत्यत्राऽऽह—

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

कामात्मानः कामिनः स्वर्गपराः स्वर्गप्रधानाः । जन्मकर्मफलप्रदां जन्म विशिष्टशरीरेन्द्रियप्राप्तिः । कर्मणः फलानि स्वर्गादीनि । जन्म च कर्मफलानि च जन्मकर्मफलानि । तानि प्रददातीति जन्मकर्मफलप्रदा तां वाचम् । क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषाः पाकयज्ञादयः । बहूनर्थाल्लाँति प्रतिपादयतीति बहुला । [ क्रियाविशेषैर्बहुला ] क्रियाविशेषबहुला ताम् । भोगैश्वर्यगतिं भोगः शब्दादिविषयलाभः, ऐश्वर्यमणिमादि, भोगैश्वर्ययोर्गतिस्तां भोगैश्वर्यगतिं प्रति तल्लक्षणां शब्दादिविषयलाभाणिमादिसाधनभूतामित्यर्थः । तां वाचं त्यज तदर्थे पुरुषार्थबुद्धिं मा कार्षीरित्यर्थः ।

---

१ क. ख. ग. घ. ङ. 'लाभगतिम' ।

तथा च श्रुतिः—" प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म " इत्यादि ॥ ४३ ॥

कस्मात्सा वाक्त्याज्येत्यत्राऽऽह यदि सा वाक्प्रमाणत्वेनोपादीयते तदनुष्ठाने तत्फलप्राप्तौ च प्रसक्तिः स्यात्ततश्च—

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

भोगैश्वर्यप्रसक्तानां भोगैश्वर्ययोरत्र प्रणयवतां तया वाचाऽपहृतचेतसामाच्छादितविवेकप्रज्ञानां व्यवसायात्मिका साङ्ख्ये योगे वा बुद्धिः समाधौ परमात्मावबोध इयमेव बुद्धिः परमपुरुषार्थतया कर्तव्येत्येवं निश्चिता सा बुद्धिर्न विधीयते नोत्पादयितुं शक्यते । तस्मादियं वाक्परमपुरुषार्थविरोधित्वात्त्याज्येत्यभिप्रायः ॥ ४४ ॥

केनोपायेन सा वाक्त्यज्यत इत्यत्राऽऽह—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥

त्रय एव गुणास्त्रैगुण्यं सत्त्वरजस्तमांसि तत्कार्यत्वाद्रागद्वेषौ * त्रैगुण्यवन्तौ । तौ विषयौ येषां ते वेदास्त्रैगुण्यविषयाः । निस्त्रैगुण्यो भवोपायैरुन्मूलितरागद्वेषो भवेत्यर्थः । निर्द्वंद्वो निर्गतशीतोष्णादिः । नित्यसत्त्वस्थः सदा सत्त्वगुणप्रधानः । तथा निर्योगक्षेमः । अनुपात्तस्योपादानं योग उपात्तस्य रक्षणं क्षेमः । योगक्षेमप्रसक्तस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव । एष तव तस्या वाच + स्तत्त्यागोपदेशः ॥ ४५ ॥

ज्ञाननिष्ठैकार्थभूतबुद्धेर्व्यवसायिनो योगनिष्पन्नस्य श्रौतस्मार्तफलानवाप्तिलक्षणो दोष इति चेन्नैवम् । यतः—

यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

× यथा लोके कूपतटाकाद्यनेकस्मिन्नुदपान उदकं पीयतेऽस्मिन्नित्युदपानं जलाशयस्तस्मिञ्जलाशये यावान्यावत्प्रमाणः स्नानपानादिरर्थः फलं स सर्वोऽर्थः सर्वतःसंप्लुतोदके कूपतटाकाद्यविभागेन स्थिते जलपूरे भवत्येव, यथैवं तथा वेदविहितयागदानादिसाधनसाध्यो यावानर्थस्तावान्विजानतोऽकामहतस्य ब्राह्मणस्य भवति । "सर्वं तदभि-

* त्रैगुण्यशब्दोऽस्ति ययोस्तौ लक्षणया त्रैगुण्यशब्दबोध्यावित्यर्थः । + त्यागोपाय इति तु पठितुं युक्तम् । × यथेत्यधिकम् ।

१ क. ख. ग, घ. ङ. 'भैन त' ।

समेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद स वेद " इति श्रुतेः । " सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते " इति च वक्ष्यते ॥ ४६ ॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

कर्मण्येवाधिकारो न ज्ञाननिष्ठायां ते तव । तत्र कर्म कुर्वतो मा फलेष्वधिकारोऽस्तु कर्मफलतृष्णा मा भूत् । कदाचन कस्यांचिदवस्थायामित्यर्थः । यदा कर्मफलतृष्णा स्यात्तस्मान्मा कर्मफलहेतुर्भूः । यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत् । यदि कर्मफलं नेष्यते किं कर्माणि(णा) बहुरूपेणानुष्ठितेनेति मा ते तव सङ्गोऽस्त्वकर्माणि, अकरणे प्रीतिर्मा भूत् ॥ ४७ ॥

यदि कर्मफलयुक्तेन न कर्तव्यं कर्म कथं तर्हि कर्तव्यमित्यत्रोच्यते —

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥

योगस्थः सन्कुर्वनुष्ठेयकर्माणि केवलमीश्वरार्थमीश्वरो मे तुष्यतीति सङ्गं त्यक्त्वा धनंजय । फलतृष्णाशून्येन क्रियमाणे[षु] सत्त्वशुद्धिज्ञानप्राप्तिलक्षणा सिद्धिस्तद्विपर्ययोऽसिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि । कोऽसौ योग इदमेव तत्सिद्ध्यसिद्ध्यो. समत्वं योग उच्यते ॥ ४८ ॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥

यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्म तस्मात्कर्मणो दूरेणात्यन्तदूरमेवावरमधमं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात्समत्वबुद्धियुक्तात्कर्मणो जन्ममरणादिहेतुत्वादित्यर्थः । अत एव योगविषयायां बुद्धौ तत्पाकजायां सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थय । परमार्थज्ञानशरणो भवेत्यर्थः । यतोऽवरं कर्म कुर्वाणाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः कृपणाः । " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः " इति श्रुतेः ॥ ४९ ॥

समत्वबुद्धियुक्तः सन्स्वकर्म चानुतिष्ठन्यत्फलं प्राप्नोति तच्छृणु —

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

बुद्धियुक्तः समत्वबुद्ध्या युक्तो जहातीहास्मिँल्लोक उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण । तस्मात्समत्वबुद्धियोगाय युज्यस्व घटस्व । योगः कर्मसु कौशलम् । स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरा-

पिशाचेतस्कतया, तत्कौशलम् । यद्बन्धस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥ ५० ॥

इतश्च फलसङ्गं त्यक्त्वा स्वधर्मोऽनुष्ठेयः—

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥

कर्मजं कर्मफलमिष्टदेहादिप्राप्तिलक्षणं त्यक्त्वा बुद्धियुक्ता ज्ञानिनो मनीषिणो मननशीला जन्मना बन्धो जन्मबन्धस्तेन विनिर्मुक्ता जीवन्त एव जन्मबन्धविनिर्मुक्ताः सन्तः पदं वैष्णवं मोक्षाख्यं गच्छन्त्यनामयं सर्वोपद्रवरहितमित्यर्थः ॥ ५१ ॥

योगानुष्ठानजनिता सत्त्वशुद्धिः कदा प्राप्यत इत्यत्राऽऽह—

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येनाऽऽत्मानात्मविवेकं कलुषीकृत्य विषयान्प्रत्यन्तःकरणं प्रवर्त्यते तद्बुद्धिर्व्यतितरिष्यति । शुद्धभावमापद्यत इत्यर्थः । तदा तस्मिन्काले गन्तासि प्राप्तासि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च । तदा श्रोतव्यं श्रुतं [ च ] निष्फलं प्रमातीत्यर्थः ॥ ५२ ॥

मोहकलिलात्ययद्वारेण लब्धात्मविवेकप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यसि तच्छृणु—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

श्रुतिविप्रतिपन्नाऽनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रुतैः श्रवणैर्विप्रतिपन्ना न संप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन्काले स्थास्यति निश्चला विक्षेपचलनवर्जिता समाधौ समाधीयतेऽस्मिन्निति समाधिरात्मनीत्येतत् । अचला तत्रापि विकल्पवर्जितेत्येतद्बुद्धियुक्तेः कारणं तदा योगमवाप्स्यसि ॥ ५३ ॥

अवाप्तयोगस्य लक्षणबुभुत्सयाऽर्जुन उवाच—

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

स्थिता प्रतिष्ठिताऽहमस्मि परं ब्रह्मेति प्रज्ञा यस्य तस्य का भाषा भाषणं वचनं

१ घ. °वर्तन्ते । २ क. ख. ग. ङ. °ष्यं तेनाऽऽ° ।

कथमसौ भाष्यते। समाधिस्थस्य समाधौ स्थितस्य केशव। स्थितधीः स्थितप्रज्ञः किं प्रभाषेत किमर्थं स्वरूपं भाषेत। किमासीत कथं वाऽऽसीत। व्रजेत किं कथं वा गच्छेदित्यर्थः। स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छ्यते। स्थितप्रज्ञस्येत्यारभ्याऽऽध्यायपरिसमाप्तेः स्थितप्रज्ञस्य लक्षणं साधनं चोपदिश्यते। सर्वत्राध्यात्मशास्त्रे लक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात्। यानि यत्नसाध्यानि [तानि] लक्षणानि सर्वत्राध्यात्मशास्त्रे विद्यन्ते॥ ५४॥

अतस्तान्येव साधनानि भगवानुवाच—

श्रीभगवानुवाच--

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥ ५५॥

प्रजहाति प्रकर्षेण जहाति परित्यजति यदा कामानिच्छाभेदान्हे पार्थ मनोगतान्मनसि प्रविष्टानात्मन्येव प्रत्यगात्मस्वरूप एवाऽऽत्मना स्वेनैव बाह्यलाभनिरपेक्षस्तुष्टः परमार्थदर्शनामृतरसलाभेनान्यस्मिन्वस्तुन्यलंप्रत्ययवान्स्थितप्रज्ञः। स्थिता प्रज्ञाऽऽत्मानात्मविवेकजा यस्य स स्थितप्रज्ञो विद्वांस्तदोच्यते। त्यक्तपुत्रवित्तलाभः संन्यास्यात्माराम आत्मक्रीडावान्स्थितप्रज्ञ इत्यर्थः॥ ५५॥

किंच—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥ ५६॥

दुःखेष्वाध्यात्मिकादिष्वनुद्विग्नमप्रक्षुभितं मनो यस्य सोऽनुद्विग्नमनाः। तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य। नाग्नेरिवेन्धनाद्याधानेन सुखान्यनुवर्तन्ते स विगतस्पृहः। वीतरागभयक्रोधः। रागश्च भयं च क्रोधश्च विगता यस्मात्स वीतरागभयक्रोधः। स्थितधीः स्थितप्रज्ञो मुनिर्मननशीलस्तदोच्यते॥ ५६॥

किंच—

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥ ५७॥

यो मुनिः सर्वत्र स्वदेहजीवनादिष्वनभिस्नेहोऽभिस्नेहवर्जितः। तत्तत्प्राप्य शुभाशुभम्। तत्तच्छुभाशुभं लब्ध्वा [नाभिनन्दति] न हृष्यति न द्वेष्टी(ष्टि) [न विषादं करोती]त्यर्थः। तस्यैवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता॥ ५७॥

---

१ क. 'मप्र'। २ क. ख. ग. क. 'सम'।

किंच—

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

यदा संहरते सम्यगुपसंहरति, अयं ज्ञाननिष्ठायां प्रवृत्तो मुनिः कूर्मोऽङ्गानीव। यथा कूर्मोऽभ्यासात्स्वाङ्गान्युपसंहरति सर्वशः सर्वत एवं ज्ञाननिष्ठ इन्द्रियाणीन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहराति । तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यम् ॥ ५८ ॥

तत्र विषयाननाहरन्नभ्यासात्कूर्मोऽङ्गानीवेन्द्रिया[ण्य]र्थेभ्य उपसंहरति, अतस्त-स्यापि प्रज्ञा प्रतिष्ठिता स्यादित्यत आह—

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

यद्यपि विषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाणि निराहारस्यानाह्रियमाण-विषयस्याऽऽतुरस्य काष्ठतपसि स्थितस्य मूर्खस्यापीन्द्रियाणि निवर्तन्ते न व्याप्रियन्ते देहिनो देहवतः । मूढमदग्रहेण क्रियमाणं तपः काष्ठतपः । रसवर्जं रसो रागो रसिको रसज्ञ इति प्रयोगदर्शनाद्रागं वर्जयित्वा । स्थितप्रज्ञालक्षणं तु रागेण सहेन्द्रियाणां विषयेभ्यो व्यावृत्तिरभिमता । कथं तर्हि विषयेभ्यो रागस्य निवृत्तिरिति चेद्रसोऽप्यस्य यतेः परं परमात्मानं दृष्ट्वोपलभ्याहमेव तदिदंभूत इति निवर्तते । निर्बीजरागः संपद्यत इत्यर्थः । नासति सम्यग्दर्शने रागस्योच्छेदः । तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥ ५९ ॥

तस्य च सम्यग्दर्शनस्थैर्यस्योपायमाह—

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥

यततो यतमानस्यापि पुरुषस्य विपश्चितो मेधाविनोऽपि मन इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि प्रसभं हरन्ति ॥ ६० ॥

यस्मादेवं तस्मात्—

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

तानि सर्वाणीन्द्रियाणि वशीकृत्य युक्तः समाहितः समासीत । मत्परोऽयं वासु-देवः सर्वप्रत्यगात्मा परः प्रधानं यस्य स मत्परः । नान्योऽहं तस्माद्वासुदेवादित्युपा-सीतेत्यर्थः । वशे हि यस्येन्द्रियाणि वर्तन्तेऽभ्यासबलात्तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

अथेदानीमात्मनाशस्य मूलमुच्यते—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥

ध्यायतश्चिन्तयतः शब्दादिविषयान्सङ्गः प्रीतिस्तेषु शब्दादिषु विषयेषूपजायत उत्पद्यते। सङ्गात्प्रीतेः संजायते समुत्पद्यते कामस्तृष्णा। कामात्कुतश्चित्प्रतिहतात्तु क्रोधोऽभिजायते ( *रज्यमाने विसेवितश्च ) ॥ ६२ ॥

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥

क्रोधाद्भवति जायते संमोहः कार्याकार्याविवेकः। संमोहात्स्मृतिविभ्रमः शास्त्राचार्योपदेशजातसंस्कारजनितायाः स्मृतेर्भ्रंश उत्पत्तिनिमित्तप्राप्तौ सत्यामनुत्पत्तिः। ततश्च स्मृतिभ्रंशाद्बुद्धिनाशः कार्याकार्यविवेकलक्षणाया बुद्धेर्नाशः। बुद्धिनाशात्स्वयं प्रणश्यति। एतावान्हि पुरुषो यावत्कार्याकार्यविवेकस्तन्नाशे नष्ट एव पुरुषो भवति॥६३॥

अथेदानीं मोक्षकारणमुच्यते—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

रागश्च द्वेषश्च रागद्वेषौ तत्पुरःसरा हीन्द्रियाणां प्रवृत्तिः स्वाभाविकी। ताभ्यां वियुक्तैरिन्द्रियैरात्मवश्यैर्विषयाश्चरन्नुपलभमानो योग्यात्मवश्यैः स्वाधीनैर्विधेय आत्माऽन्तःकरणं यस्य सोऽयं विधेयात्मा प्रसादं स्वास्थ्यमधिगच्छति प्राप्नोति ॥ ६४ ॥

प्रसादे सति किं स्यादित्यत्रोच्यते—

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

प्रसादे प्रसन्नतायां सत्यां सर्वदुःखानामाध्यात्मिकाधिभौतिकाधिदैविकानां हानिर्नाशः। आध्यात्मिकानि जन्मजरामरणे तदन्तराले परिपातितवातपित्तश्लेष्मसंक्षोभजनिता विकाराः। आधिभौतिकानि भूतानामितरेतरं वध्यघातकभावेन जनितानि दुःखानि शस्त्रप्रहरणादीनि। आधिदैविकानि वातातपवर्षतत्प्रतिबन्धजनितानि दुःखानि। एतेषामाध्यात्मिकादीनां दुःखानां हानिर्नाशोऽस्य योगिनः प्रजायते। किंच प्रसन्नचेतसः स्वस्थान्तःकरणस्याऽऽशु शीघ्रं बुद्धिः पर्यवतिष्ठन आकाशमिवाऽऽत्मैकत्वग्राहिणी परितः समन्तादवतिष्ठते। आत्मस्वरूपेणैव निश्चला भवतीत्यर्थः ॥६५॥

---

* एतच्चिन्हान्तर्गतो ग्रन्थोऽधिक इति भाति ।

---

१ ग. राज्यमाने । २ क. ङ. 'राद्वीप' । ३ क. ग. घ. ङ. 'ध्यवधघा' ।

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥

न विद्यते सेयं प्रसन्ना बुद्धिरात्मस्वरूपविषयाऽयुक्तस्यासमाहितस्य । न चायुक्तस्य भावनाऽऽत्मज्ञानाभिनिवेशो भावना । न चाभावयतः शान्तिरभावयत आत्मज्ञानाभिनिवेशशून्यस्य शान्तिरुपशमो न विद्यते । अशान्तस्यानुपरतेन्द्रियस्य कुतः सुखम् । इन्द्रियाणां विषयतृष्णातो निवृत्तिः सुखं न विषयतृष्णा, दुःखमेव हि सा । तृष्णायां सत्यां न सुखस्य गन्धमात्रमप्युपपद्यते ॥ ६६ ॥

अनुपरतेन्द्रियस्य सुखं नास्ति कस्मादित्यत्राऽऽह—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

इन्द्रियाणां हि यस्माच्चरतां विषयेषु वर्तमानानां यन्मनोऽनुविधीयतेऽनुवर्तते तदस्य हरति प्रज्ञां=हरति तदिन्द्रियविषयविकल्पने प्रवृत्तं मनोऽस्य यतेर्हरति प्रज्ञामात्मानात्मविवेकजां वायुर्नावमिवाम्भसि, उदके जिगमिषतां मार्गादुद्धृत्य दुर्गममार्गे यथा वायुर्नावं प्रवर्तयत्येवमात्मविषयां प्रज्ञामिन्द्रियानुविधायि मनो विषयाभिमुखी करोति ॥ ६७ ॥

यततो ह्यपीत्युपन्यस्तस्यानेकविधोपपत्तिमुक्त्वा तस्यार्थमुपपाद्योपसंहरति—

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

यस्यैव योगिनः परमात्मनि नित्यशुद्धबुद्धमुक्तस्वभावे सर्वगतेऽयमहमस्मीति प्रज्ञा प्रतिष्ठिता स संयमयोगी ॥ ६८ ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

या निशा रात्रिः सर्वपदार्थानामविवेककारिणी सर्वभूतानां निशेति सर्वप्राणिव्यवहारागोचरब्रह्मरूपमुच्यते, तस्यां जागर्ति प्रबुद्धवानास्ते । यस्यां सर्वभूतानि जाग्रति प्रबुध्यन्ते यस्यां व्यवहरन्ति साऽविद्या निशा परमार्थस्वरूपं ब्रह्म पश्यतो मुनेर्योगिनः । एवमविद्याविद्याभेदादविदुषः सर्वकर्माणि, विदुषः सर्वकर्मनिवृत्तिः स्वभावात्सकलकर्मसंन्यास एव ॥ ६९ ॥

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षो न कामकामिन इत्येवमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।

* इदं पदमधिकम् ।

१ क. ग. घ. ङ. दुर्मार्गे । २ ङ. मुखां क ।

तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥

आपूर्यमाणमद्भिः। अचलप्रतिष्ठम्। अचला प्रतिष्ठा यस्य सः। तमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वद्यथा तद्वत्तथा कामा यं प्रविशन्ति परमात्मज्ञानेनैव रागद्वेषाभ्यामकम्प्यमानं स शान्तिं मोक्षलक्षणां प्राप्नोति। न कामकामी। कामान्कामयत इति कामकामी ॥ ७० ॥

यस्मादेवं तस्मात्—

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

चरति शरीरजीवनमात्रमेव चेष्टते। निस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निःस्पृह उपेक्षकः। निर्ममः शरीरादौ ममेदमितिबुद्धिरहितः। निरहंकारो विद्यावत्त्वादिनिमित्तेनाऽऽत्मसंभावनारहितः। स शान्तिमविद्योपरमलक्षणामधिगच्छति सैषा ज्ञाननिष्ठा ॥ ७१ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः। नैनां स्थितिं प्राप्य लब्ध्वा विमुह्यति न मोहं प्राप्नोति। स्थित्वाऽस्यां ब्राह्म्यां स्थितौ यथोक्तायामन्तकालेऽप्यन्ते वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति गच्छति ॥ ७२ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने द्वितीयोऽध्यायः ॥ २ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—११९ )।

---

( अथ तृतीयोऽध्यायः )।

**अर्जुन उवाच—**

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

कर्मणः सकाशाद्धे जनार्दन बुद्धिर्ज्यायसी तव मता चेत्तत्र तर्हि घोरे युद्धात्मके कर्मणि मां किमर्थं नियोजासि केशव ॥ १ ॥

**किंच—**

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

व्यामिश्रेणेव संकीर्णेनेव बुद्धिं मोहयसीव कदाचित्कर्म श्रेय इति कदाचिद्बुद्धिः श्रेयसीति च संकीर्णेनेव वाक्येन बुद्धिं मोहयसीव मोहं नयसीव मे । तत्तस्मादेवमनुष्ठेयं निश्चित्य वद । येनानुष्ठितेन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

**श्रीभगवानुवाच—**

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन( ण ) योगिनाम् ॥ ३ ॥

लोकेऽस्मिञ्शास्त्रानुष्ठानाधिकृतेषु पुरुषेषु द्विविधा द्विप्रकारा निष्ठा स्थितिरनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायं कुर्वता पुरा प्रोक्ता मया सर्वज्ञेनेश्वरेणानघापाप । का निष्ठा द्विविधेत्यत आह—तत्र ज्ञानमेव योगस्तेन सांख्यानामात्मविषयविवेकज्ञानवतां निष्ठा प्रोक्ता । कर्मयोगेन( ण ) कर्मैव योगः । अनेन कर्मयोगेन( ण ) कर्मिणां कर्मनिष्ठा प्रोक्तेत्यर्थः ॥ ३ ॥

घोरं कर्म न कर्तव्यमिति मन्यमानमर्जुनं प्रति कर्माधिकारिणा कर्म कर्तव्यमिति प्रतिपादयितुमाह—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

कर्मणामनारम्भादकरणान्नैष्कर्म्यं नैष्कर्म्यलक्षणामकर्त्रात्मज्ञानलक्षणां सिद्धिं पुरुषो नाश्नुते । यथा ज्ञानाधिकारी ज्ञानेन । तर्हि सकलकर्मसंन्यास एव पुरुषार्थस्तमनुतिष्ठामीति चेत्तदपि न नियतः । न च संन्यसनादेव कर्मत्यागमात्रादेव सिद्धिं नैष्कर्म्यलक्षणां सिद्धिं समधिगच्छति । किंच योगानुष्ठानपूर्वकात्सत्त्वशुद्धिजनितात्समविज्ञानात्सिद्धिं समधिगच्छति ॥ ४ ॥

तत्र कश्चित्कुतो नैष्कर्म्यं नाश्नुत इति हेत्वाकाङ्क्षायामाह—

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

न हि यस्मात्क्षणमपि जातु कदाचित्, तिष्ठत्यकर्मकृदक्रियः। कस्मात्, कार्यते प्रवर्त्यते हि यस्मादवश एव कर्मैव सर्वः प्राणी प्रकृतिजैर्गुणैः सत्त्वरजस्तमोभिः। अज्ञ इति वाक्यशेषः ॥ ५ ॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि संयम्य निरुध्य य आस्त उपविशति मनसेन्द्रियार्थान्विषयान्स्मरन्विमूढात्मा विमूढान्तःकरणो मिथ्याचारः पापाचारः स उच्यते। नासौ संन्यासी, मानसव्यापारस्यानुपरतत्वादित्यभिप्रायः ॥ ६ ॥

* यत एवमतः—

यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन कर्मेन्द्रियैर्वाक्पाण्यादिभिः। किमारभत इत्यत्राऽऽह—कर्मयोगम्। कर्मैव योग आराध्याराधकसंबन्धरूपकत्वात्। असक्तोऽफलाकाङ्क्षी स विशिष्यते तस्मान्मिथ्याचारात् ॥ ७ ॥

यत एवमतः—

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

तस्मान्नियतं नित्यं कर्म त्वं कुरु। यतः कर्म ज्यायः श्रेष्ठं फलकरत्वात्। अकर्मणोऽनारम्भात्। इतश्च ज्यायः, शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिध्येन्न प्रसिध्यति। अकर्मणोऽकरणात्तस्मात्कर्तव्यमित्यभिप्रायः ॥ ८ ॥

यत्तु मन्यसे बन्धहेतुत्वात्कर्म न कर्तव्यमिति तदसत्। कथम्—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

यज्ञार्थात्। यज्ञो विष्णुः। "यज्ञो वै विष्णुः" इति श्रुतेः। सोऽर्थः प्रयोजनं

---

* इतः पूर्वं सकलादर्शपुस्तकेषु "तस्मान्मिथ्याचारात्" इत्यधिको ग्रन्थोऽस्ति।

यस्य तद्यज्ञार्थं विष्ण्वाराधनार्थं तस्माद्विष्ण्वाराधनार्थात्कर्मणोऽन्यत्रायं लोकः कर्मबन्धनः । तदर्थं विष्ण्वाराधनार्थं यज्ञादिकर्म कौन्तेय मुक्तः सङ्गो येन स मुक्तसङ्गः समाचरानुतिष्ठ ॥ ९ ॥

इतश्चाधिकृतेन कर्तव्यं कर्म—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

सहयज्ञा यज्ञसहिताः प्रजाः प्राणिनो ब्राह्मणाद्यान्यज्ञाधिकारिणः सृष्ट्वा पुरा पूर्वं सर्गादावुवाच प्रजापतिः प्रजाः सृष्टेरनन्तरम् । कथमुवाच । अनेन यज्ञेनोत्पादयध्वमेष यज्ञो वो युष्माकमस्तु भवत्विष्टकामधुक् । इष्टकामानभिमतान्फलविशेषान्दोग्धीतीष्टकामधुक् ॥ १० ॥

कथमिष्टकामधुग्यज्ञ इत्यत्राऽऽह—

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

देवान्भावयतानेनेत्यादि । देवानिन्द्रादीन्भावयत वर्धयतानेन यज्ञेन । ते देवा वर्धिता युष्मान्भावयन्तु । परस्परं भावयन्तः श्रेयः परं विज्ञानप्राप्तिक्रमेणावाप्स्यथ ॥ ११ ॥

किंच—

इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

इष्टान्भोगानभिमतान्स्वर्गपुत्रादीन्वो युष्मभ्यं देवा इन्द्रादयो दास्यन्ते यज्ञभाविताः । अतस्तैर्देवैर्दत्तान्परिगृह्याप्रदाय चरुपुरोडाशादिरूपेणादत्त्वा( एते ) [ भ्यो ] यो भुङ्क्ते स्तेन एव सः । आनृण्यमकृत्वा तैर्दत्तोपभोगादीनामित्यभिप्रायः ॥१२॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

यज्ञाः पञ्च महायज्ञाः । देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । एते पञ्च महायज्ञास्तेषां शिष्टं यज्ञशिष्टम् । देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः । सर्वकिल्बिषैः सर्वपापैर्मुच्यन्ते [यज्ञ]शिष्टाशिनः । चुल्लीपेषण्यवस्करीखण्डनीकुम्भलक्षणपञ्चसूनाकृतैः प्रमादकृतहिंसाजनितैश्च किल्बिषैर्मुच्यन्ते । ये त्वात्मकारणात्पचन्ति ते तु पापाः पापस्वरूपा अघं पापमेव भुञ्जते । तस्मादवश्यं पञ्च महायज्ञाः कर्तव्याः ॥ १३ ॥

---

१ क. घ. ङ. °वस्कारिख° । २ क. घ. ङ. °खण्डनिकु° । क. ख. ग. ङ. °क्षणा चुल्ल्यादिप° । घ. °चुल्ल्यादिप° ।

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

अन्नाद्भवन्ति जायन्ते भूतानि कार्यकरणसंघातात्मकानि । पर्जन्याद्वृष्टेरन्नसंभवः । यज्ञाद्भवति पर्जन्यः ।

अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ इति स्मृतेः ।

यज्ञाद्यागक्रियासमुद्भवाद्यज्ञा( द्धर्मा )द्भवति पर्जन्यः । यज्ञः कर्मसमुद्भवो याग-क्रियासमुद्भवो धर्मः कर्मसमुद्भवः कर्मर्त्विग्यजमानव्यापारात्मको यागः समुद्भवः कारणं यस्यासौ कर्मसमुद्भवो यागक्रियासमुद्भव इत्यर्थः ॥ १४ ॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

कर्म ब्रह्मोद्भवं ब्रह्म वेदः प्रकाशकं यस्य तत्कर्म ब्रह्मोद्भवं विद्धि विजानीहि । ब्रह्म पुनर्वेदाख्यमक्षरसमुद्भवं विद्धि । अक्षरः परमात्मा समुद्भवः कारणं यस्य ब्रह्म-णस्तदक्षरसमुद्भवम् । अक्षरात्पुरुषनिःश्वासवत्समुद्भूतं ब्रह्म । तस्मात्सर्वार्थप्रकाशकत्वा-त्सर्वगतं ब्रह्म वेदो यज्ञप्रकाशकत्वाद्यज्ञे प्रतिष्ठितम् ॥ १५ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

एवमेत्नपूर्वकं प्रवर्तितं चक्रं निष्पादितं चङ्क्रमणशीलं नानुवर्तयति नानुतिष्ठति योऽघायुरघमात्मन इच्छतीत्यघायुः । इन्द्रियाणामारामं इन्द्रियक्रीडास्थानं मोघं वृथा हे पार्थ स जीवति स प्राणं धारयति । तस्मादज्ञेन कर्मण्यधिकृतेन यज्ञाः कर्तव्या इत्यभिप्रायः ॥ १६ ॥

कर्मण्यनधिकृतस्य ज्ञानिनः कर्म न कर्तव्यमित्याह—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

यस्त्विति । यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिरात्मनि रतिर्यस्य[स] आत्म-रतिः । आत्मन्ये(नै)व तृप्तो नान्नरसादिना । आत्मन्येव च संतुष्टः संतुष्टो बाह्यार्थ-लाभे भवति तमनपेक्ष्याऽऽत्मन्येव च संतुष्टः । आत्मविदस्तस्य कार्यं करणीयं न विद्यते ॥ १७ ॥

---

१ ग. घ. 'यंकार' । २ क. ख. ङ. श्रुतेः । ३ क. ख. ग. . 'मंनुपू' । ४ क. ख. ङ. क्रमणशीलं । ५ क. ङ. 'ति प्रा' । ६ घ. प्राणान्धार' ।

किंच—

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।

न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

तस्याऽऽत्मरतेः कृतेन करणेन नार्थः प्रयोजनमेवं नाप्यकृतेनाकरणेन कश्चित्प्रत्यवायः । न चास्य विदुषः कश्चिद्ब्रह्मादिस्थावरान्तेष्वर्थव्यपाश्रयः कार्यार्थमाश्रयणम् ॥ १८ ॥

त्वं तु कर्मण्यधिकृतः—

तस्मादसक्तः सततं कार्यं कर्म समाचर ।

असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥

तस्मादसक्तः फलसङ्गवर्जितः सततं सदा कार्यं कर्तव्यं कर्म युद्धादि समाचरानुतिष्ठ । किं तत इति चेत् । असक्तः सङ्गवर्जितो हि यस्मादाचरन्ननुतिष्ठन्कर्म परं परमात्मानमाप्नोति पुरुषः, तस्मान्नित्यं कर्म कुर्विति संबन्धः ॥ १९ ॥

इतश्च [कर्म कर्तव्यम्—]

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।

लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥

कर्मणैव हि पूर्वे क्षत्रिया जनकप्रभृतयः संसिद्धिं मोक्षं प्राप्तुं प्रवृत्ताः । यदि ते प्राप्तसम्यग्दर्शनाः केवलं लोकसंग्रहार्थं कर्मणि प्रवृत्तास्तर्हि त्वमपि लोकसंग्रहं लोकस्य धर्मपरिसंग्रहं पश्यंस्तदर्थमेव कर्म कर्तुमर्हसि ॥ २० ॥

लोकसंग्रहार्थं किं कर्तव्यमित्युच्यते—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।

स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

यद्यत्कर्माऽऽचरति श्रेष्ठः प्रधानस्तत्तदेव कर्माऽऽचरतीतरो जनस्तदनुगतः । किंच स श्रेष्ठो यल्लौकिकं वैदिकं वा प्रमाणं कुरुते प्रत्येति लोकस्तदनुवर्तते तदेव प्रमाणी करोतीत्यर्थः ॥ २१ ॥

तद्दर्शयति—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।

नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

मे मम पार्थ कर्तव्यमनुष्ठेयं त्रिषु लोकेषु किंचन किमपि न । कुत इति चेत्, न मेऽनवाप्तमप्राप्तमवाप्तव्यं प्राप्तव्यं प्रापणीयं नास्ति तथाऽपि कर्मण्येव वर्ते ॥ २२ ॥

यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याऽऽत्मविदः कर्तव्याभावेऽपि परानुग्रहः कर्तव्य इत्यात्मसम इदमुच्यते—

१ क. ख. घ. ङ. °त्मसंभेद उच्य° ।

यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

[यदि ह्यहमिति] ॥ २३ ॥

ततश्च को दोष इत्यत आह—

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

उत्सीदेयुरिमे लोका इति । अनेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्तः कर्मोपहतिं कुर्यामिति । ततश्च ममेश्वरस्याननुरूपमापद्येत ॥ २४ ॥

ततश्च—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

सक्ताः प्रसक्ताः फलाभिसंधौ । विद्वाञ्ज्ञानी तथा तेन प्रकारेण । असक्तः फलाभिसंधिरहितः । चिकीर्षुः कर्तुमिच्छुः । लोकसंग्रहं कर्तव्यं धर्मोत्पादनम् ॥ २५ ॥

किंच—

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥

समाचरन्कर्म न कर्तव्यमिति बुद्धेरन्यथाभावं न जनयेन्नोत्पादयेत् । केषामज्ञानामविवेकिनां कर्मसङ्गिनामिदं विशिष्टफलसाधनमिति कर्मसङ्गिनाम् । किं तु कुर्यात् । जोषयेत्कारयेत्सर्वकर्माणि यज्ञादीनि विद्वान्स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥ २६ ॥

इदं च कर्तृत्वमात्मनोऽपरमार्थरूपम् । कथम्—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥

प्रकृतेर्व्यक्तस्य गुणैः सत्त्वरजस्तमोभिः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकाराणि । अहंकारविमूढात्माऽहंकारोऽव्यक्त[कार्य]करणसंघातेष्वनात्मन्यहमिति बुद्धिस्तेनाहंकारेण विमूढो व्यामूढ आत्मा यस्य सोऽयमहंकारविमूढात्मा कर्ताऽहमेषां कर्मणामिति (*कर्तव्यमिति) मन्यते ॥ २७ ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

---

* धनश्चिह्नान्तर्गतमधिकम् ।

तत्त्वविदकर्ता स्वरूपवित्। गुणाः सत्त्वादयः। गुणानां कर्तृभूतानां कर्मणां च कार्यभूतानां विभागयोः सतोः। गुणाः सत्त्वरजस्तमांसि गुणेषु तत्कार्येषु गमनागमनादिकर्मसु कर्तृत्वेन वर्तन्त इति तु मन्यमानो न सज्जते। नाहं कर्तेति मन्यत इत्यर्थः॥२८॥

ये पुनः—

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत्॥ २९॥

प्रकृतेर्गुणैर्वयं कर्तार इति संमूढाः सन्तः सज्जन्ते गुणानां कर्मसु वयं कर्म कुर्मः फलायेति सज्जन्ते मन्यन्ते। तानकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान्मन्दप्रज्ञान्कृत्स्नवित्सर्वात्मब्रह्मविन्न विचालयेत्। बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः॥२९॥

त्वं तु कर्माधिकारी—

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥ ३०॥

मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वकर्मभोक्तरि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा विवेकबुद्ध्या निराशीर्निर्ममः कर्मणि तत्फले च ममत्ववर्जितो युध्यस्व विगतज्वरो विगतसंतापः॥ ३०॥

यदेतन्मम मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं त[त्त]था—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥ ३१॥

येऽधिकारिणो मे मम मतमिदमुक्तस्वरूपं नित्यं सदाऽनुतिष्ठन्ति मानवाः श्रद्धावन्तः श्रद्दधाना अनसूयन्तो मयि वासुदेव उपदेष्टर्यसूयारहितास्तेऽपि कर्मभिः सकलकिल्बिषैर्मुच्यन्ते॥ ३१॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः॥ ३२॥

ये त्वेतन्मम मतमभ्यसूयन्त ईर्ष्यन्तो नानुतिष्ठन्ति न कुर्वन्ति मे ममेश्वरस्य मतं सर्वाणि च तानि ज्ञानानि तेषु विमूढानपरमार्थविदो विद्धि विजानीहि नष्टानचेतसोऽविवेकिनः॥ ३२॥

तथा हि—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥ ३३॥

---

१ क. ख. ग. ङ. 'वन्तोऽन'।

सदृशमनुरूपं चेष्टते स्वस्याः प्रकृतेः । प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तो यः सा, प्रकृति(ते)स्तस्याः सदृशमेव सर्वजन्तुर्ज्ञानवानपि किमुत मूर्खः । प्रकृतिं यान्ति भूतानि निग्रहो निरोधः किं करिष्यति मम वाऽन्यस्य वा ॥ ३३ ॥

अतः शास्त्रानर्थक्यमिति चेत्तत्राऽऽह—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे रागोऽनिष्टे द्वेष इत्येवं यद्यपि प्रकृत्याख्य-स्वभावतः प्रवृत्तिनिवृत्ती तथाऽपि तयो रागद्वेषपूर्वकत्वं प्रत्येक्षा रागात्प्रवृत्तिर्द्वेषान्नि-वृत्तिरिति । अतो रागद्वेषौ नियम्य यथाशास्त्रं प्रवर्तेते । यतस्तौ रागद्वेषौ परिपन्थिनौ पुरुषार्थप्रतिबन्धकौ ॥ ३४ ॥

किं चान्यत्—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

यतः श्रेयान्प्रशस्यतरः स्वधर्मो विगुणः कतिपयाङ्गे रहितः परस्य धर्मः परधर्म-स्तस्मात्परधर्मात्सगुणमनुष्ठिताद्धिनाऽतः स्वधर्मे निधनं श्रेयः प्रशस्यतरम् । परधर्मो भयावहः । भयमावहतीत्यर्थः * ॥ ३५ ॥

बुद्धिपूर्वकारिपुरुषेषु प्रसिद्धा (परधर्मा(?)) नुष्ठानदर्शनात्तस्य कारणबुभुत्सयाऽर्जुन उवाच—

अर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

अथेति । नियोजित इव ॥ ३६ ॥

आत्मैपापप्रवृत्तिकारणं श्रीभगवानुवाच—

श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

---

* इत उत्तरं "बुद्धिपूर्वकारिपुरुषेषु प्रसिद्धमित्यर्थः" इत्यधिकं ख. ग. घ. ङ. पुस्तकेषु ।

---

१ क. ग. घ. ङ. 'त्यक्ष । इ° । २ ङ. 'त्क्षं रा° । ३ क. ख. घ. ङ. प्रवर्तते । ४ क. ख. ग. ङ. 'त्मप्र° ।

एष कामः क्रोधश्च रजोगुणसमुद्भवः । महाशनः । महदशनं यस्य स महाशनो विषयसेवानुपरतः । अत एव महापाप्मा । महान्पाप्मा पापं यस्माद्भवति स महापाप्मा । एनं कामं क्रोधं च, इहाधिकारिपुरुषाणां विषये शत्रुं विद्धि ॥ ३७ ॥

कथं स वैरीत्यत्राऽऽह—

धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

धूमेनाऽऽव्रियते पिधीयते वह्निर्यथा । यथा चाऽऽदर्शो दर्पणो मलेन च कालिमाख्येन पिधीयते । यथा चोल्बेन जरायुणा गर्भाशयगतः प्राणी तथा तद्वत्तेन कामेन क्रोधेनेदं विवेकप्रभवं ज्ञानमावृतमाच्छन्नम् । सकलपुरुषार्थप्रकाशकज्ञानावरणद्वारेणायं कामः क्रोधश्च वैरीत्यभिप्रायः ॥ ३८ ॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥

आवृतं पिहितं विवेकज्ञानमेतेन कामेन क्रोधेन च ज्ञानिनोऽपि किमुत मूर्खस्य नित्यवैरिणा नित्यं वैरी तेन । नित्यवैरित्वं ज्ञानापिधानद्वारकम् । कामरूपेण दुष्पूरेणानलेन च । दुःखेन पूर्यत इति दुष्पूरः । न विद्यतेऽलं पर्याप्तिरस्येत्यनलः । भूयो भूयो विषयसेवया वर्धमानेन कामेन प्रयुक्तः श्रेयोर्थी पुरुषः पापं चरतीत्यर्थः ॥ ३९ ॥

किं चास्य कामस्य कारणमुच्यते—

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

इन्द्रियाणि लोचनादीनि । मनः संकल्पात्मकम् । बुद्धिरध्यवसायात्मिका । अस्य कामस्याधिष्ठानं कारणमुच्यते । इन्द्रियेण प्रहितं प्रथमं मदलीढं विषयमालोच्य मनसा तस्य सुखहेतुत्वं संकल्प्याहमनेनेन्द्रियेणैव विषयं [illegible] इति बुद्ध्याऽध्यवसाय पुरुषः कामयते। तस्मादिन्द्रियादीनि कामस्याधिष्ठानं कारणम् । एतैरिन्द्रियादिभिः कारणैरयं देहिनं विमोहयति । भोक्तृत्वप्रतिपत्तौ हि कारणं भवतीति ज्ञानं सम्यग्ज्ञानमावृत्याऽऽच्छाद्य यत एवमतः ॥ ४० ॥

यस्मादिन्द्रियाणि रागद्वेषमूलम्—

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

तस्मात्तान्यादौ प्रथमं नियम्य निरुध्यैनं प्रकृतं वैरिणं पाप्मानं सकलपापहेतुं कामं प्रजहीति । ज्ञानमात्मशास्त्राचार्योपदेशजनितं विज्ञानं तत्पूर्वकः प्रत्यगात्मानुभवस्तयोर्नाशनं प्रजहि ॥ ४१ ॥

यं ज्ञानरूपमात्मानं काम आवृणोति तस्य स्वरूपमाह—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः॥ ४२॥

इन्द्रियाणि श्रोत्रादीनि पराणि प्रकृष्टानि सूक्ष्मत्वात्सकलदेहव्यापित्वाच्चाऽऽहुः कथयन्ति। तेभ्योऽपीन्द्रियेभ्यः परं प्रकृष्टं मन आहुः। तत्पूर्वकत्वादिन्द्रियाणां प्रवृत्तेः। मनसोऽपि परा बुद्धिः। बुद्धिरध्यवसायात्मिका तदर्थत्वान्मनसः। यो बुद्धेः परतो बोद्धा स कामेनाऽऽवृत इत्यभिप्रायः॥ ४२॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम्॥ ४३॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः॥ ३॥

---

एवं बुद्धेः संभवं यतो बुद्धेः परं बोद्धारमात्मानं बुद्ध्वा ज्ञात्वाऽन्तःकरणमात्मनैव संस्तभ्य कामरूपं शत्रुं जहि। दुरासदं दुःखेनाऽऽसाद्यते विनाश्यत इति दुरासद[स्त]म्॥ ४३॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने तृतीयोऽध्यायः॥ ३॥

---

(आदितः श्लोकानां समष्ट्यङ्काः—१६२)

---

(अथ चतुर्थोऽध्यायः)।

---

पूर्वोक्तं योगमनेकशिष्टपरिग्रहेण च(प्र)स्तौति प्ररोचनार्थं श्रीभगवान्—

श्रीभगवानुवाच—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥ १॥

इमं पूर्वोक्तं विवस्वते प्रोक्तवानहमव्ययमविनाशिनम्। स च विवस्वान्मनवे स्वपुत्राय प्राह। स च मनुरिक्ष्वाकवेऽब्रवीत्॥ १॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परंतप॥ २॥

एवं क्षत्रियपरम्पराप्राप्तं प्रोक्तमिमं राजर्षयो मनुप्रभृतयो विदुर्विजानन्ति। स योगो महता कालेन नष्टो विच्छिन्नसंप्रदायः संवृत्तः। परंतप परांस्तापयतीति परंतपः। शत्रूंस्तप[इत्यभिप्रायः] ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

स एव विच्छिन्नसंप्रदायो योगः प्रोक्तः पुरातनः। ते तव। रहस्यमप्रकाश्यमुत्तमं निरुपमम् ॥ ३ ॥

एवं श्रुत्वाऽर्जुन उवाच—

अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

अपरमर्वाचीनं वसुदेवगृहे भवतो जन्म, परं पूर्वं विवस्वत आदित्यस्य जन्म सर्गादावतः कथमेतद्विजानीयां त्वमादौ विवस्वते प्रोक्तवानिति ॥ ४ ॥

आत्मनो निरीश्वरतां मूर्खबुद्धिपरिकल्पितां परिहरन्भगवानुवाच—

श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

बहूनीति। तान्यहं वेद विजानाम्यनावरणज्ञानत्वात्त्वं तु न वेत्थ न जानीषेऽविद्याकामकर्मावृतत्वात् ॥ ५ ॥

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावे जन्मेत्यर्जुनस्य प्रश्ने सति भगवानाह—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

अजोऽपि जन्मरहितोऽपि सन्नव्ययात्माऽनुपक्षीणज्ञानशक्तिस्वभावो भूतानामाब्रह्मस्तम्बपर्यन्तानामीश्वर ईशनशीलोऽपि प्रकृतिं मम वैष्णवीं मायां त्रिगुणात्मिकां यस्या वशे सर्वं जगद्वर्तते यया मोहितं स्वमात्मानं वासुदेवं मां न जानाति तां प्रकृतिं स्वामधिष्ठाय स्वीकृत्य संभवामि देहवानिव जात इव च भवामि। आत्ममाययाऽऽत्मनो मायया। न परमार्थतो लोकवत् ॥ ६ ॥

तच्च जन्म कदा किमर्थं चेत्यत्रोच्यते—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥

यदा यदा यस्मिन्यस्मिन्काले धर्मस्य प्राणिनामभ्युदयस्य नि.(यनि)श्रेयससाधनस्य ग्लानिर्भवति। अधर्मस्य यदाऽभ्युत्थानमुद्भवो भवति तदाऽहमात्मानं सृजाम्युत्पत्स्यामीति ॥ ७ ॥

किमर्थमित्यत्राऽऽह—

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

परित्राणायेति। युगे युगे प्रतियुगम् ॥ ८ ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

जन्म मायारूपं कर्म च धर्मसंस्थापनार्थाय कंसवधादिरूपं दिव्यमप्राकृतमैश्वर्यं यो वेत्ति तत्त्वतो यथावद्देहं त्यक्त्वा पुनर्जन्म न गच्छति। किं तु मामेवैति प्राप्नोति मुच्यत इत्यर्थः ॥ ९ ॥

नैष मोक्षमार्ग इदानीं प्रवृत्तः। किं तर्हि पूर्वमपि—

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

मन्मया ब्रह्मविदो मामुपाश्रिता मामेव परमेश्वरमाश्रिताः। ज्ञानमेव तपस्तेन ज्ञानतपसा पूताः शुद्धाः। मद्भावमीश्वरभावमागता मुक्ता इत्यर्थः ॥ १० ॥

मद्भावमागता इत्युपश्रित्य मोक्षमेव प्रयच्छति भगवान्भक्तानां न ज्ञानैश्वर्यादिफलमित्यर्जुनस्य वचनमाशङ्क्याऽऽह—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

ये यत्फलप्रार्थिनः पुरुषा यथा येन प्रकारेण सात्त्विकराजसतामसभावेन मां प्रपद्यन्ते तानहं तथैव तत्फलदानेनैवैश्वर्यादिफलार्थिनस्तद्दानेनैवेत्यभिप्रायः। ममेश्वरस्य वर्त्म मार्गं यथाभिलषितफलप्रदत्वमनुवर्तन्तेऽनुसरन्ति। यद्यत्फलमभिलषितं तदेव मां प्रार्थयन्त इत्यभिप्रायः ॥ ११ ॥

किं च—

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

काङ्क्षन्तः कामयमानाः कर्मणां यज्ञादीनां सिद्धिं स्वर्गादिफलं यजन्ते पूजयन्तीह लोके देवता इन्द्राद्याः। यतः क्षिप्रं शीघ्रं मानुषे लोके कर्मजा सिद्धिः कर्मफलं भवति जायते न लोकान्तरे वर्णाश्रमादिविशेषालाभात् ॥ १२ ॥

अत एव—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

चत्वारो वर्णाश्चातुर्वर्ण्यं मयेश्वरेण सृष्टम् । गुणाः सत्त्वादयस्तद्विभागेन च । तत्र सात्त्विकस्य ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्माणि । सत्त्वोपसर्जनस्य रजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि । रजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि । तामसस्य शूद्रस्य शुश्रूषैव कर्मेत्येवंगुणकर्मविभागशश्चातुर्वर्ण्यं मया सृष्टमित्यर्थः । तस्य चातुर्वर्ण्यस्य कर्मणः शमप्रभृतेः कर्तारं मामीश्वरं विद्धि जानीहि । वस्तुतोऽकर्तारमव्ययमविकारिणम् ॥ १३ ॥

कर्तृत्वे कर्मफलसंबन्धात्तवानीश्वरत्वमित्याशङ्क्याऽऽह—

न मां कर्माणि लिम्पन्ति न कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

न मां कर्माणि यज्ञादीनि लिम्पन्ति, उपश्लिष्यन्ति देहाद्यारम्भकत्वेनाहंकाराभावात् । न मे कर्मफले स्पृहा । अतो हेतोरकर्त्रात्मज्ञानादहं कर्मभिरलिप्त इत्यतोऽपि मां परमात्मानं योऽभिजानात्यवगच्छति कर्मभिर्न स बध्यते न लिप्यते ॥ १४ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

अहमेवेश्वरः कर्मणः स्रष्टाऽहमेव च कर्तेति ज्ञात्वा पूर्वैः पुरुषैः पूर्वतरमेव कृतं कर्म, त्वं तस्मादेव हेतोः कुरु ॥ १५ ॥

अध्यात्मज्ञानेन कर्मफलं प्राप्तं मन्यमानः स्वयमेव कर्मणाऽऽध्यात्मिकस्वरूपाविष्करणार्थमाह—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्षसेऽशुभात् ॥ १६ ॥

किं कर्म किमकर्मेति । कर्माकर्मस्वरूपमजानन्तः कवयोऽपि मोहिताः परममूढाः । तत्त्वतस्तत्ते कर्म प्रवक्ष्यामि यत्कर्मस्वरूपं ज्ञात्वाऽशुभात्संसाराद्विमोक्ष्यसे ॥ १६ ॥

कर्म नाम शरीरेन्द्रियव्यापारस्तदभावश्चाकर्म कथमत्र कवयोऽपि मोहिता इति चेदुच्यते—

कर्मणोऽह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

---

१ क. ख. घ. ङ. °णाऽऽध्या°।

कर्मणो ह्यपि बोद्धव्यं शरीरेन्द्रियव्यापारनिर्वर्त्यं रूपं बोद्धव्यं किंचिदस्ति । तथा विकर्मणः प्रतिषिद्धस्यापि बोद्धव्यं प्रतिषेध्यरूपमस्ति । तथाऽकर्मणः कर्माभावस्यापि बोद्धव्यं रूपमस्ति । यत. कर्मणो गतिर्गहना दुर्बोधा ॥ १७ ॥

इदानीं कर्माकर्मविकर्मणा बोद्धव्यं रूपं दर्शयितुमाह—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

कर्मणि शरीरेन्द्रियव्यापारलक्षणे कर्मण्यकर्म नित्यसिद्धत्वादात्मस्वरूपं, द्रष्टव्यमिति शेषः । यथा मरीच्युदक उदकस्य स्वरूपभूता मरीचयस्तदभाव उदकस्य नैरात्म्यप्रसङ्गादेवं कर्मणि अकर्त्रात्मस्वरूपमस्ति । तथाऽकर्मके वस्तुनि निश्चले कर्मस्वरूपं द्रष्टव्यम् । यथा नावि स्थितस्य निश्चले तटनगे भ्रमिकर्मदर्शनम् । अत एव यः कर्मण्यकर्मरूपमकर्माणि कर्मरूपं पश्यति स मनुष्येष्वविकारिषु पुरुषेषु बुद्धिमान् । स च युक्तो योगी । स च कृत्स्नकर्मकृत्सकलकर्मकृदित्यर्थः । तस्मात्त्वमपि कर्माकर्मणोर्यथावत्स्वरूपपरिज्ञानेन कर्माणि कुर्वित्यर्थः ॥ १८ ॥

तस्मात्—

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

यस्य कर्माकर्मविदः सर्वाः क्रियाः कामसंकल्पवर्जिताः फलसंकल्परहितास्तं ज्ञानाग्निदग्धकर्माणं कर्माकर्मेतरज्ञानमेव ज्ञानाग्निस्तेन दग्धकर्माणं बुधा ब्रह्मविदः पण्डितमाहुः ॥ १९ ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥

स पण्डितः कर्मफलासङ्गं त्यक्त्वा नित्यतृप्तो निराश्रय आश्रयविवर्जितः । कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः । कर्मणा तस्य बद्धत्वाभावादित्यभिप्रायः ॥ २० ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥ २१ ॥

निराशीः प्रार्थनारहितः, यतचित्तात्मा संयतान्तःकरणस्त्यक्तसर्वपरिग्रहः शारीरं केवलं कर्म शरीरस्थितिसाधनं कर्म कुर्वन्नाऽऽप्नोति किल्बिषं पापम् ॥ २१ ॥

यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥

---

१ ग. ङ. भ्रमेण क° २ ग. ध. °र्मणा त° . ३ क. प. ङ. बद्धकत्वा° । ग. बन्धकत्वा° ।

यदृच्छालाभसंतुष्टोऽप्रार्थितलाभसंतुष्टः । द्वंद्वातीतः शीतोष्णसुखदुःखादिरहितः । विमत्सरः क्रोधवर्जितः । कर्मणां फलभावाभावयोः समचित्तः । स एवंभूतः कृत्वाऽपि न निबध्यते न कर्मफलं शरीरादि प्राप्नोति ॥ २२ ॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

गतसङ्गस्य फलसंकल्परहितस्य, ज्ञानावस्थितचेतसः परमात्मनि व्यवस्थितबुद्धेः, यज्ञायेश्वराराधनार्थमाचरतः कर्मानुष्ठातुस्तत्कर्म समग्रं प्रविलीयतेऽफलप्रदं भवेत्, अबद्धकं भवति ॥ २३ ॥

अयमपरो योगः—

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

ब्रह्म परमात्माऽर्प्यते हूयतेऽनेनेति अर्पणं स्रुवादिस्तदेव ब्रह्म तदेव हूयत इति हविश्चरुपुरोडाशादिकं तथा ब्रह्मैवाग्निस्तत्र ब्रह्मणा हुतं प्रक्षिप्तं यस्यैतत्सर्वं तेन पुरुषेण ब्रह्मैव गन्तव्यम् । कथंभूतेन, ब्रह्मकर्मसमाधिना । ब्रह्मणा कर्माणि समाधिं प्रति पर्यवस्यते(ता) । अत्र श्लोकेऽविदुषोऽर्पणादिपञ्चके ब्रह्मदृष्टिः कर्तव्यतयोपदिश्यते । विदुषामात्मैवेदं सर्वमिति परमार्थरूपत्वं विद्यमानमुपदिश्यते ॥ २४ ॥

इदानीं ब्रह्मोपासनप्रसङ्गेनोपासनान्तराणि सत्त्वशुद्ध्यर्थमविदुषामाह—

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

देवा इन्द्रादयस्तेषामिदं दैवं सोमयागादि । अपरे योगिनोऽनुष्ठानमन्तरेणापि दैवमेव यज्ञं ध्यानेन निष्पादयन्ति सत्त्वशुद्ध्यर्थं ब्रह्मैवाग्निर्ब्रह्माग्निरूपेणोपास्यं ब्रह्माग्निस्तस्मिन्ब्रह्माग्नौ । अपरे तु यज्ञं परमात्मानं यज्ञेन सोमयागादिनोपजुह्वति ध्यानेन संपादयन्ति होममित्यर्थः ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

श्रोत्रमादिर्येषां तानि श्रोत्रादीनीन्द्रियाणि, अन्ये ब्रह्मविदः संयमाग्निषु चित्तनिरोधाग्निषु जुह्वति ध्यानेन संपादयन्ति । अन्ये योगिनः शब्दादीञ्शब्दस्पर्शरूपरसगन्धादीन्वि(न्धान्वि)षयानिन्द्रियाग्निषु जुह्वति ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

इन्द्रियाणां कर्माणि प्रेक्षणादीनि, तथा प्राणकर्माण्युच्छ्वासादीनि, अपरे योगिन आत्मनोऽन्तःकरणस्य संयमः स एव योगः स एवाग्निरात्मसंयमयोगाग्निस्तस्मिञ्ज्ञानदीपिते विवेकज्ञानेन प्रज्वलिते जुह्वति । एवं होमं संपादयन्तीत्यर्थः ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

द्रव्यादीनां हिरण्यगवादीनां दानमेव यज्ञो येषां ते द्रव्ययज्ञाः । दानमेव यज्ञमुपासत इत्यर्थः । अपरे तु तपोयज्ञाः । तपः कृच्छ्रचान्द्रायणादिकं तदेव यज्ञबुद्ध्या कुर्वन्ति । योगयज्ञा योगश्चित्तवृत्तिनिरोधः स एव यज्ञो येषां ते योगयज्ञाः । यज्ञबुद्ध्या चित्तवृत्तिनिरोधमेव कुर्वन्तीत्यर्थः । स्वाध्यायज्ञानयज्ञाः । यज्ञशब्दः प्रत्येकमभिसंबध्यते । स्वाध्यायो वेदपाठः स एव यज्ञो येषां ते तथा । ज्ञानं शास्त्रपरिज्ञानं तदेव यज्ञो येषां ते ज्ञानयज्ञाः । यज्ञबुद्ध्या ज्ञानं कुर्वन्तीत्यर्थः । सर्व एव यतयो यतनशीलाः । संशितं तीक्ष्णीकृतं व्रतं येषां ते संशितव्रताः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

अपानेऽपानवायौ प्राणं जुह्वति, उपासनया प्राणहोमं संपादयन्तीत्यर्थः । प्राणरूपे वायावपानं जुह्वति । यथाऽग्नौ घृतादिकं तथा होमं ध्यानेन संपादयन्ति । कथंभूताः सन्तः । प्राणश्चापानश्च तयोर्गती प्राणापानगती रुद्ध्वा निरुध्य प्राणायामपरायणाः । प्राणायामः परमयनं स्थितिर्येषां ते प्राणायामपरायणाः ॥ २९ ॥

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

अपरे योगिनो नियतं संकुचितं येषां भोजनं ते नियताहाराः । अनशनलक्षणे तपसि व्यवस्थिता इत्यर्थः । प्राणान्प्राणेषु जुह्वति प्राणहोमं ध्यानेन संपादयन्तीत्यर्थः । सर्वेऽप्येते यज्ञविदो यज्ञोपासकाः ॥ ३० ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

यज्ञस्य शिष्टं यज्ञशिष्टम् । यज्ञशिष्टमेवामृतं, यज्ञशिष्टं तथाऽमृतमिति श्रुतेः । अतो यज्ञविदो यज्ञपरिश्रान्ताः सन्तः शरीरयात्रार्थं यद्भुञ्जते तद्यज्ञशिष्टामृतं भुञ्जाना [ यज्ञशिष्टामृतभुज ] इत्यर्थः । यान्ति गच्छन्ति ब्रह्म सनातनं नित्यम् । अयज्ञस्य पुंसोऽयमपि लोको नास्ति, विशिष्टैर्निन्द्यमानत्वात् । कुतोऽन्यः परलोकोऽनेकसाधनसाध्य यज्ञादिसाध्यस्तस्माद्यज्ञः प्रयत्नतः कार्य इत्यर्थः ॥ ३१ ॥

---

१ क. यत्नशी° । २ घ. एते ।

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

एवमुक्तप्रकारेण बहुविधा बहुप्रकारा यज्ञा वितता विस्तीर्णा ब्रह्मणः परमात्मनो मुख आस्ये । एते यज्ञाः परमात्मनः प्रत्यासन्नाराधनभूता इत्यर्थः । तांश्च यज्ञान्कर्मजान्वाङ्मनःकायकर्मात्मनः । स्वरूपभूतात्मनः शुद्धकूटस्थरूपत्वात् ॥ ३२ ॥

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

श्रेयानिति । ज्ञाननिर्वृत्तो यज्ञो ज्ञानयज्ञः । मनोनियमरूपत्वेन परमात्मसंबोधस्य प्रत्यासन्नरूपत्वात् । [सर्वं] क्रियानुरूपमुपासनानुरूपं च । ज्ञाने परमात्मसंबोधे परिसमाप्यते विलीयते । विलयनं गच्छतीत्यर्थः ॥ ३३ ॥

एवंभूतं परमात्मानं कथमहं जानीयामित्यत्राऽऽह—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

तज्ज्ञानरूपं ब्रह्म विद्धि विजानीहि । प्रणिपातेन प्रकर्षेण नीचैर्दण्डवत्पतनं प्रणिपातो नमस्कारविशेषस्तेन । परिप्रश्नेन परितः सर्वतोऽवलोक्य गुरोश्चित्तप्रसादावगत्या प्रश्नस्तेन च । सेवयेच्छानुवर्तनेन । एवं सत्युपदेक्ष्यन्ति ते तव ज्ञानं परमार्थसंबोधनस्वरूपं ब्रह्म । ज्ञानिनो ज्ञानवन्तस्तत्त्वदर्शिनः साक्षात्कृतपरमार्थाः ॥ ३४ ॥

तज्ज्ञानं विशिनष्टि—

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥

यज्ज्ञानरूपं ब्रह्म ज्ञात्वा पुनः पश्चादेवं मोहं व्यामोहं न यास्यसि न गन्तासि । तज्ज्ञानमुपदेक्ष्यन्तीत्यर्थः । पुनरपि विशिनष्टि—येन ज्ञानेन भूतानि कार्यकरणसंघातानि भूतान्यशेषेण द्रक्ष्यसि, उपलक्षयिष्यसि । आत्मनि प्रत्यगात्मनि, मयीश्वरे वासुदेवात्मनि ॥ ३५ ॥

आत्मनि च ज्ञानफलमाह—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

अपि चेदसि भवसि सर्वेभ्यः पापकृद्भ्योऽतिशयेन पापकृत्पापकृत्तमः । सर्वं ज्ञानप्लवेनैव प्लवतेऽनेनेति प्लवो जलतरणं ज्ञानमेव प्लवो ज्ञानप्लवस्तेनैव वृजिनं पापं तरिष्यसि ॥ ३६ ॥

---

१ क. ख. घ. ङ. °नम्रता ।

ब्रह्म[illegible] सकलवृजिनतरणत्वमाह—

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

यथाऽयं दृष्टान्तः। एधांसि काष्ठानि समिद्धो ज्वलितोऽग्निर्भस्मसात्सर्वं कुरुतेऽर्जुन। तथा ज्ञानमेवाग्निः सर्वकर्माणि नित्यनैमित्तिककाम्यप्रतिषिद्धरूपाणि भस्मसात्कुरुते * तथा ॥ ३७ ॥

यत एवमतः—

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विन्दति ॥ ३८ ॥**

ज्ञानेन तत्त्वावबोधेन सदृशं पवित्रं पावनमिह लोके न विद्यते। तज्ज्ञानं योगसंसिद्धो योगानुष्ठानेन संस्कृतान्तःकरणः कालेन परिपाकेणाऽऽत्मन्यन्तःकरणे विन्दति लभते स्वयमेव ॥ ३८ ॥

इदानीं ज्ञानप्राप्त्युपाय उच्यते—

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

श्रद्धावाञ्श्रद्दधानः। लभते प्राप्नोति। तत्परस्तदेव परं प्रधानं यस्य स तत्परो ज्ञाननिष्ठ इत्यर्थः। संयतेन्द्रियः संयतानि निरुद्धानीन्द्रियाणि चक्षुरादीनि येन स संयतेन्द्रियः। अनेनोपायेन ज्ञानप्राप्तौ किं लभत इत्यत्राऽऽह—ज्ञानमेकत्वावबोधं लब्ध्वा प्राप्य परां मोक्षलक्षणां शान्तिमचिरेणाल्पकालेनाधिगच्छति ॥ ३९ ॥

इदानीं ज्ञानप्राप्तौ बाधकमाह—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

अज्ञश्चेति। अज्ञो ज्ञानप्राप्तेर्विमुखोऽश्रद्दधानः श्रद्धाशून्यश्च संशयात्मा। संशय इति पचाद्यच्। संशयः सर्वत्र संदेहवानात्मा यस्य स संशयात्मा विनश्यति। ज्ञानलक्षणात्पुरुषार्थाद्भ्रश्यत इत्यर्थः। किंचान्यत्संशयात्मनस्तस्यायं सर्वसाधारणोऽपि लोको नास्ति। न च परः स्वर्गाख्यः। न्यप्यस्यान्नपानादि किमपि सुखमस्तीति ॥ ४० ॥

असंशयानं तु—

* इदमधिकम्।

१ क. ख. ग. ङ. °नस्योपा°। २ घ. °त्मनः सर्वसंशयात्मन°। ३ ख. °दिकम°।

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥

योगसंन्यस्तकर्माणं योगेन फलत्यागेन संन्यस्तानि त्यक्तानि कर्माणि येन तं ज्ञानसंछिन्नसंशयं ज्ञानं परमात्मावबोधस्तेन संछिन्नाः संशया यस्य तमात्मवन्तं जितेन्द्रियं कर्माणि बन्धकान्यपि न निबध्नन्ति । इष्टानिष्टानि शरीरेन्द्रियविषयप्रापकाणि न भवन्तीत्यर्थः ॥ ४१ ॥

अत उपसंहरति—

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

यस्मात्सर्वानर्थहेतुः संशयस्तस्मादज्ञानसंभूतमविद्याप्रभवं हृत्स्थं हृदि तिष्ठतीति हृत्स्थस्तं ज्ञानप्रतिपक्षतया ज्ञानावकाशं हृदयदेशमधिष्ठाय वर्तमानं ज्ञानमेवासिर्ज्ञानासिस्तेन* छित्त्वा विनाश्यैनं पूर्वोक्तसंशयं योगं फलसङ्गरहितं कर्माऽऽतिष्ठ सेवस्व । उत्तिष्ठ योद्धा भव हे भारतेति ॥ ४२ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने चतुर्थोऽध्यायः ॥ ४ ॥

---

(आदितः श्लोकानां समष्ट्यङ्काः—२०४ ) ।

---

( अथ पञ्चमोऽध्यायः ) ।

[ संन्यासकर्मयोगान्यतरश्रैष्ठ्यविविदिषया ] अर्जुन उवाच—

अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

---

* एतदग्रे सकलादर्शपुस्तकेषु “ मुहुर्भूयो भूय उत्पद्यमानः ” इत्यधिकम् ।

---

१ ख. ग. घ. ङ. 'त्तिष्ठोर्ध्वं भ' ।

सकलकर्मसंन्यासेन शमदमादिसाधनानुष्ठानेन ब्रह्म जिज्ञासमानस्य ब्रह्मावबोधः स्यादेव। तथा मुमुक्षोः सकलकाम्यप्रतिषिद्धकर्मसंन्यासेन वासुदेवार्चनबुद्ध्या कर्माण्यनुतिष्ठतः सत्त्वशुद्धेर्नान्तरीयकत्वेन संबोधः स्यादेवेत्यभिप्रायः॥ १॥

भगवानर्जुनस्याभिप्रायं विदितवानुवाच—

श्रीभगवानुवाच—

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते॥ २॥**

संन्यासः कर्मयोगश्चोभौ निःश्रेयसकरौ मोक्षकरावेव। तर्हि तयोः को विशेष इति चेत्तयोस्तु कर्मसंन्यासात्कर्मत्यागात्कर्मयोगः श्रेयान्। कर्मणां ज्ञानफलकत्वेन विस्पष्टं विधानात्स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति॥ २॥

कथं श्रेयानिति चेत्—

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति।**
**निर्द्वंद्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते॥ ३॥**

ज्ञेयो बोद्धव्यः। स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति, कथमिति चेत्कामक्रोधादयो द्वंद्वास्तद्रहितो निर्द्वंद्वः। हि यस्मान्महाबाहो सुखमक्लेशेन बन्धात्संसारात्प्रमुच्यते मुक्तो भवति। कर्मयोगी कृतसकलकर्मसंन्यास एवेत्यभिप्रायः। रागद्वेषवियोगात्। ३॥

इदानीं योगस्य संन्यासयोगत्वात्स्वरूपैक्येन(ण) फलैक्यं दर्शयितुमाह—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥ ४॥**

सांख्ययोगौ पृथग्भिन्नौ बाला मन्दाः प्रवदन्ति न पण्डिता बुद्धिमन्तः। यस्मादेकमप्यास्थितः सेवमानः सम्यग्यावदुभयोः सांख्ययोगयोः फलं विन्दते लभते॥ ४॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति॥ ५॥**

यत्सांख्यैर्ज्ञाननिष्ठैः प्राप्यते स्थानं मोक्षाख्यं तद्योगैः कर्मभिरपि गम्यते। अत एवाभिन्नं सांख्यं योगं च यः पश्यति स पश्यति सम्यग्दर्शीत्यर्थः॥ ५॥

कर्मसंन्यासात्कर्मयोगो विशिष्ट इत्युक्तं कथं विशिष्ट इत्यत्राऽऽह—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति॥ ६॥**

संन्यासो ज्ञाननिष्ठा महाबाहोऽयोगिभिर्दुःखेन प्राप्यते कर्मभिस्तु सुखेन सत्त्वशुद्धि-

द्वारेण प्राप्यतेऽतः कर्मयोगो विशिष्यत इत्युक्तम् । यतो योगयुक्तो मुनिर्ज्ञानी ब्रह्माचिरेणाधिगच्छति प्राप्नोति ॥ ६ ॥

अतः—

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

योगयुक्तो विशुद्धात्मा प्राप्तसत्त्वशुद्धिर्विजितात्मा रागद्वेषाभ्यामनाकृष्यमाणो जितेन्द्रियः सर्वभूतात्मभूतात्मा सर्वेषु भूतेष्वात्मैकत्वदर्शी कर्माणि कुर्वन्नपि तत्फलैर्न लिप्यते न संबध्यते ॥ ७ ॥

यत एवमतः—

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥

आत्मनोऽकर्तृत्वान्नैव किंचिदहं करोमीति मन्येत तद्दर्शनादिषु कर्तृत्वस्याविद्यातः प्रतिभासे सत्यपि । पश्यन्रूपमालोचयञ्शृण्वञ्शब्दं शृण्वञ्जिघ्रन्गन्धानुपाददानोऽश्नन्नोदनान्भुञ्जानो गच्छन्पद्भ्यां विहरन्स्वपञ्शयानः श्वसञ्श्वासं विसृजन्नपि ॥ ८ ॥

तथा—

प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

प्रलपन्प्रभाषमाणो विसृजन्मूत्रपुरीषे विसृजन्गृह्णन्हस्तेनोपाददान उन्मिषन्निमिषन्नुन्मीलन्निमीलन्नपीन्द्रियाणि चक्षुरादीनीन्द्रियार्थेषु विषयाभिमुखं वर्तन्त इति धारयन्मन्यमानो नैव किंचित्करोमीति युक्तो मन्येत तत्त्वविदिति पूर्वेण संबन्धः । तस्यैवं तत्त्वविदः सर्वकार्यकारणचेष्टासु कर्मस्वकर्मैव संपश्यतः सम्यग्दर्शिनः सर्वकर्मसंन्यास एवाधिकारस्तत्कर्मणोऽभावदर्शनात् । न हि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्तावुदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तन्ते ॥ ९ ॥

यस्तु पुनरतत्त्ववित्प्रवृत्तश्च कर्मयोगे भवति(१)—

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

कर्माणि ब्रह्मणीश्वर आधाय तदर्थं करोमीति भृत्य इव स्वात्मार्थे मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः कर्माणि लिप्यते न स पापेन संबध्यते पद्मपत्रमिवाम्भसोदकेन । केवलं सत्त्वशुद्धिफलमात्रमेव स्यात् ॥ १० ॥

---

१ क. ॰नस्तत्त्व॰ ।

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११ ॥

केवलैर्ममत्ववर्जितैरीश्वराय करोमि न कर्मफलायेति ममत्वबुद्धिशून्यैरिन्द्रियैः। केवलशब्दः कायादिभिरपि प्रत्येकमभिसंबध्यते। सर्वव्यापारादिषु ममतावर्जिता योगिनः कर्माणि कुर्वन्ति। सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्त्वशुद्धय इत्यर्थः। तस्मात्तत्रैवाधिकार इति कर्मैव कुरु ॥ ११ ॥

तस्माच्च—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

युक्तः कर्मफलं त्यक्त्वा युक्त ईश्वराय कर्माणि न कर्मफलायेत्येवं समाहितः सन्कर्मफलं त्यक्त्वा शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायां भवाम्। सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः। यस्तु पुनरयुक्तोऽसमाहितः। कामेन करणं कामकारस्तेन कामकारेण कामप्रेरणयेत्यर्थः। मम फलायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यते। न मुक्तो भवेदित्यर्थः ॥ १२ ॥

सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

यस्तु परमार्थदर्शी स नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च सर्वाणि कर्माणि तानि मनसा विवेकबुद्ध्याऽकर्मदर्शनेन संत्यजेदित्यर्थः। आस्ते तिष्ठति सुखमित्यर्थः। वाङ्मनःकायचेष्टानिरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तबाह्यसर्वप्रयोजन इति सुखमास्त इत्युच्यते। वशी जितेन्द्रिय इत्यर्थः। क्वाऽऽस्त इत्यत्राऽऽह—नवद्वारे। सप्त शीर्षण्यान्यात्मन उपलब्धिद्वाराणि। अधो द्वे मूत्रपुरीषविसर्गार्थे इति। तैर्द्वारैर्नवद्वारं पुरमुच्यते। शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानोत्पादकैः पौरैरिवाधिष्ठिते देहे देही सर्वाणि संन्यस्याऽऽस्ते। किं विशेषणेन, सर्वोऽपि देही संन्यस्य संन्यासीव देह एवाऽऽस्त इति चेत्। उच्यते—यस्त्वज्ञो देहेन्द्रियसंघातमात्रात्मदर्शनः स सर्वोऽपि देहे(ही?) भूमावासने वाऽऽस इति मन्यते। नहि देहमात्रात्मदर्शिनो गेह इव देह आस इति प्रत्यय उपपद्यते। परकर्मणां च परस्मिन्नात्मन्यविद्ययाऽध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते। उत्पन्नविवेकज्ञानस्य सर्वकर्मसंन्यासिनोऽपि देह एव नवद्वार आसनं प्रवृत्तं प्रारब्धकर्मादिसंस्कारशेषानुवृत्त्या देह एव विशेषज्ञानोत्पत्तेर्देह एवाऽऽस्त

---

१ घ. गेहे।

इत्यर्थस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् । यद्यपि कर्माण्यविद्ययाऽध्यारोपितानि संन्यस्यतीत्युक्तं तथाऽप्यात्मसमवायि कर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याऽऽह—नैव कुर्वन्स्वयं न च कार्यकरणानि कारयन्क्रियासु न प्रवर्तयन् । किं तत्कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत्संन्यासान्न भवति यथा गच्छतो गतिः, किंवा स्वत एवाऽऽत्मनो नास्ति । अत्रोच्यते—नास्ति स्वात्मनः कर्तृत्वं कारयितृत्वं वा । उक्तं हि—" अविकार्योऽयमुच्यते " इति । " शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते " इति । "ध्यायतीव लेलायतीव " इति श्रुतेः ॥ १३ ॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

न कर्तृत्वं स्वतो न च कुर्वन्नपि कर्माणि रथप्रासादादीनीप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा । नापि रथादि कृतवतस्तत्फलेन संयोगं कर्मसंयोगम् । यदि किंचिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन्कारयंश्च प्रवर्तत इत्युच्यते—स्वभावस्तु स्वभावोऽविद्यालक्षणा प्रकृतिर्माया प्रवर्तते ॥ १४ ॥

परमार्थतस्तु—

नाऽऽदत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥

नाऽऽदत्ते न गृह्णाति भक्तस्यापि कस्यचित्पापं नैवाऽऽदत्ते सुकृतं भक्तैः प्रयुक्तं विभुः । कथं तर्हि भक्तैः पूजालक्षणयागदानानि सुकृतं प्रयुज्यत इत्यत्राऽऽह—अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः ॥ १५ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

ज्ञानेन तु येनाज्ञानेनाऽऽवृता मुह्यन्ति जन्तवस्तदज्ञानं येषां जन्तूनां विवेकज्ञानेनाऽऽत्मविषयेण नाशितमात्मनो भवति तेषां जन्तूनामादित्यवत् । यथाऽऽदित्यः समस्तरूपादिजातमवभासयति तद्वज्ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत्परम् ॥१६॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

आत्मतत्त्वं यत्परं ज्ञानं प्रकाशितं तस्मिन्गता बुद्धिर्येषां ते तद्बुद्धयः । तदेव परं ब्रह्माऽऽत्मा येषां ते तदात्मानः । तन्निष्ठास्तस्मिन्निष्ठाऽभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठाः । तत्परायणास्तदेव परमयनं परा गतिर्येषां भवति [ते] तत्परायणाः । केवलात्मरता इत्यर्थः । ते गच्छन्त्येवंविधा अपु-

नरावृत्तिं न पुनर्देहसंबन्धम् । ज्ञाननिर्धूतकल्मषाः । यथोक्तज्ञानेन निर्धूतो(तं) नाशित(तं) कल्मषः(षं) पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषा यतय इत्यर्थः ॥ १७ ॥

येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः । कथं ते तत्त्वं पश्यन्तीत्युच्यते—

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

विद्याविनयसंपन्न उत्तमसंस्कारवति ब्राह्मणे सात्त्विके । मध्यमायां राजस्यां गवि संस्कारहीनायाम् । अत्यन्तमेव केवलतामसे हस्त्यादौ सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टं सममेवाविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः ॥ १८ ॥

नन्वभोज्यान्नास्ते दोषवन्तः, समासमाभ्यां विषमसमे पूजात इति स्मृतेर्न ते दोषवन्तः । कथम्—

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥

इहैव जीवद्भिः समदर्शिभिः पण्डितैर्जितो वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणः समभावे स्थितं मनोऽन्तःकरणम् । निर्दोषम् । यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषवत्त्वमिव विभाव्यते तथाऽपि तद्दोषैरस्पृष्टमिति निर्दोषं दोषवर्जितं हि यस्मान्नापि स्वगुणभेदाद्भिन्नं निर्गुणत्वाच्चैतन्यस्य[2] । वक्ष्यति भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च । नाप्यन्त्या[3] विशेषा आत्मनो भेदकाः सन्ति । प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः । अतः समं च ब्रह्मैकं[4] तस्माद्ब्रह्मण्येव ते स्थिताः । तस्मान्न दोषगन्धमात्रमपि तान्स्पृशति, देहादिसंघातात्मदर्शनाभिमानाभावात्तेषाम् । देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत्सूत्रं समासमाभ्यां विषमसमे पूजात इति । पूजाविषयत्वेन विशेषणात् । दृश्यते हि ब्रह्मवित्षडङ्गविच्चतुर्वेदविदिति पूजादानादौ गुणविशेषसंबन्धः । कारणं ब्रह्म तु सर्वगुणदोषवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तम् । कर्मिविषयं तु समासमाभ्यामित्यादि । इदं तु सर्वसंन्यासविषयं प्रस्तुतं सर्वकर्माणि मनसा संन्यस्येत्यारभ्याऽऽध्यायपरिसमाप्तेः ॥ १९ ॥

यस्मादेवं समं ब्रह्माऽऽत्मा तस्मात्—

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

---

१ घ. यस्तु विनयसं° भादिमु° । २ ख. ग. घ. ङ. °त्वाच्चेतनत्वस्य । ३ ख. ग. घ. ङ. °ह्यन्त्ये वि° । ४ ङ. °कं यस्मा° ।

न प्रहृष्येत्प्रहर्षं न कुर्यात्प्रियमिष्टं प्राप्य नोद्विजेत्प्राप्य चाप्रियमनिष्टं लब्ध्वा । देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते न केवलात्मदर्शिनस्तस्य प्रियाप्रियप्राप्त्यसंभवात् । किंच सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्याद्यथोक्तब्रह्मविद्ब्रह्मणि स्थितः । अकर्मकृत्सर्वकर्मसंन्यासीत्यर्थः ॥ २० ॥

किंच ब्रह्मणि स्थितः—

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥

बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च । स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेष्वसक्त आत्माऽन्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः स विन्दति लभत आत्मनि यत्सुखं तद्विन्दतीत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन युक्त आत्माऽन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते प्राप्नोति । तस्माद्बाह्यविषयेषु प्रीतौ क्षणिकायामिन्द्रियाणि निवर्तयेत् ॥ २१ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

ये हि संस्पर्शजा भोगाः, ये हि यस्मात्—संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव तेऽविद्याकृतत्वात् । दृश्यन्ते ह्याध्यात्मिकानि दुःखानि तन्निमित्तान्येव । यथेह लोके तथा परलोकेऽपीति गम्यत एवशब्दात् । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत् । न केवलं दुःखयोनय आद्यन्तवन्तश्च । आदिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च तद्वियोगभावोऽत(वस्तद्वन्त)आद्यन्तवन्तः । अनित्या मध्यक्षणभावित्वादित्यर्थः । कौन्तेय, न तेषु रमते बुधो विवेक्यवगतपरमार्थतत्त्वः । अत्यन्तमूढानामेव विषयेषु रतिर्दृश्यते । यथा पशुप्रभृतीनाम् ॥ २२ ॥

अयं च श्रेयोमार्गपरिपन्थिकष्टतमो दोषो दुर्वारश्चातस्तत्परिहारे यत्नः कर्तव्य इत्याह भगवान्—

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

शक्नोत्युत्सहत इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणान्मरणात्, मरणसीमाकरणाज्जीवतोऽवश्यंभावी हि कामक्रोधोद्भवो वेगोऽनन्तनिमित्तवान्हि स इति । यावन्मरणं तावत्स न विश्रम्भणीय इत्यर्थः । कामश्चेन्द्रियगोचरप्राप्त इष्टवि-

षये दृश्यमाने श्रूयमाणे वाऽनुभूते सुखहेतौ या गर्धिस्तृष्णा स कामः। क्रोधश्चाऽऽत्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधः। तौ कामक्रोधावुद्भवौ यस्य स कामक्रोधोद्भवः। रोमाञ्चप्रहृष्टवदननेत्रलिङ्गान्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः। गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं यः प्रस( प्रोत्स )हते सोढुं स युक्तो योगी सुखी चेह लोके नरः॥ २३॥

कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्यत्राऽऽह भगवान्—

योऽन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति॥ २४॥

योऽन्तःसुखोऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखः। तथाऽन्तरेवाऽऽत्मन्याराम[1]ः क्रीडा यस्य सोऽन्तरारामः। तथाऽन्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिः। य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोतीति॥ २४॥

किंच—

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः॥ २५॥

लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्दर्शिनः संन्यासिनः। क्षीणकल्मषाः क्षीणपापादिदोषाश्छिन्नद्वैधाश्छिन्नसंशया यतात्मानः संयतेन्द्रियाः। सर्वभूतहिते रताः सर्वेषां भूतानां हित आनुकूल्ये रता अहिंसका इत्यर्थः॥ २५॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्॥ २६॥

कामक्रोधवियुक्तानाम्। कामश्च क्रोधश्च तौ कामक्रोधौ ताभ्यां वियुक्तानाम्। यतचेतसां संयतान्तःकरणानाम्। अभित उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते। विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां सम्यग्दर्शिनामित्यर्थः॥ २६॥

सम्यग्दर्शिनां संन्यासिनां सद्योमुक्तिरुक्ता, कर्मयोगश्चेश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण सर्वकर्मसंन्यासक्रमेण मोक्षायेति भगवान्पदे पदेऽब्रवीद्वक्ष्यति च। अथेदानीं सम्यग्दर्शनान्तरङ्गं ध्यानयोगं विस्तरेण वक्ष्यामीति तत्र सूत्रस्थानीयाञ्श्लोकानुपदिशति—

---

१ ग. °रात्मन्येव।

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥

स्पर्शान्शब्दादीन्कृत्वा बहिर्बाह्याञ्श्रोत्रादिद्वारेणान्तरे बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतो बाह्या बहिरेव कृता भवन्ति । तानेव बहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः कृत्वेत्यनुषज्यते ॥ २७ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

यतेन्द्रियमनोबुद्धिर्यतानीन्द्रियाणि मनो बुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिः । मननान्मुनिः संन्यासी । मोक्षपरायणो मोक्ष एव परमयनं परा गतिर्यस्य स मोक्षपरायणो मुनिर्भवेत् । विगतेच्छाभयक्रोधः । इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधाः । विगता इच्छाभयक्रोधा यस्य सः । य एवं वर्तते संन्यासी स सदा मुक्त एव । न तस्य मोक्षादन्यः कर्तव्योऽस्ति ॥ २८ ॥

एवंसमाहितचित्तेन किंचिज्ज्ञेयमुच्यते—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥



यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च भोक्तारं सर्वलोकमहेश्वरं सर्वलोकानां महान्तमीश्वरं सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतहृदयेशं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं सकललोकबीजभूतं सदा शुद्धरूपमत्यन्तसुविमलं ज्योतिषां परमात्मानं नारायणं मां ज्ञात्वा शान्तिं संसारोपरतिमृच्छति प्राप्नोति ॥ २९ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने पञ्चमोऽध्यायः ॥ ५ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—२११ )

---

( अथ षष्ठोऽध्यायः )।

अतीताध्यायान्ते योगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य ध्यानस्य सूत्रभूताः श्लोकाः स्पर्शान्कृत्वा बहिर्बाह्यानित्यादय उपदिष्टास्तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते—

श्रीभगवानुवाच—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥ १॥

अनाश्रितः कर्मफलमित्यादि। × स संन्यासी चानाश्रितो नाऽऽश्रितः कर्मफलं तृष्णया न प्रमुच्यत इत्यर्थः। कार्यं कर्म कर्तव्यं नित्यं कर्माग्निहोत्रादि करोति यः स संन्यासी च योगी च। योगाङ्गत्वेन कर्मानुष्ठानात्। न केवलमनग्निरक्रिय एव परमार्थसंन्यासी योगी चेति मन्तव्यः॥ १॥

कर्मकरणात्कर्मयोगित्वं तावत्सिद्धं संन्यासित्वं तु साग्नौ सक्रिये नैव सिद्धं लोक इति तत्संपादयति भगवान्—

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन॥ २॥

यं संन्यासमिति प्राहुर्लौकिका योगं कर्मयोगं तं विद्धि विजानीहि पाण्डव। अस्ति हि तस्मिन्निरग्निनाऽक्रियेण परमार्थसंन्यासिना साम्यम्। किं तदित्यत्राऽऽह—परमार्थसंन्यासी भूतभविष्यद्वर्तमानेषु सर्वविषयसंकल्पं संन्यस्यति। अयं च कर्मी न ह्यसंन्यस्तसंकल्पो योगी भवति कर्मी च स उच्यते। कश्चन कश्चिदपि संन्यासी नोच्यते॥ २॥

ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणसमर्थस्तावद्गृहस्थेनाविकृतेन कर्म कर्तव्यमतः स्तौति भगवान्। ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यतोऽनुष्ठेयमेव विहितं कर्म यावज्जीवं नैतत्—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥ ३॥

योगमारुरुक्षोरारोढुमिच्छोर्मुनेः कर्म कारणं साध्यसाधनमुच्यते। योगारूढस्य तस्यैव कर्मणः शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढस्य साधनमुच्यत इत्यर्थः। आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इति विशेषणादारूढस्य च शमेनैव संबन्धकर-

---

× 'स संन्यासी च' इत्यधिकम्।

---

१ क. ख. ग. ङ. °नात्मनो न।

णात् । आरुरुक्षोरारूढस्य च शमः कर्म योऽयं कर्तव्यत्वेनाभिप्रेतं चेत्पुनस्तदारुरुक्षोरारूढस्य चेति विशेषणं विभागकरणं चोपपद्यत एवेति चेत् । न । तस्यैवेति वचनात्पुनर्योगग्रहणाच्च । योगारूढस्येति, य आसीत्पूर्वमेवाऽऽरुरुक्षुस्तस्यैवाऽऽरूढस्य शम एव कर्तव्यं कारणं योगफलं प्रत्युच्यत इति । अतो न यावज्जीवं कर्तव्यत्वप्राप्तिस्तस्यापि कर्मणः । योगभ्रष्टादिवचनाच्च । गृहस्थस्य चेत्कर्मयोगो विहितः षष्ठेऽध्याये स योगभ्रष्टः कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशङ्काऽनुपपन्ना स्यात् । अवश्यं कृतं कर्म काम्यं नित्यं वा मोक्षस्य नित्यत्वादनारभ्यत्वेन स्वं फलमारभते । एवं नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फलेन भवितव्यमित्यवोचामान्यथा वेदस्याऽऽनर्थक्यप्रसङ्गादिति । न च कर्मणि सत्युभयभ्रष्टवचनमर्थवत्कर्मणो विभ्रंशकारा-(रत्वा)नुपपत्तेः । कर्म कृतमीश्वरे संन्यस्येदु[1]त्यतः कर्तारि कर्मफलं नाऽऽरभत इति चेत् । न । ईश्वरे संन्यासस्याधिकारफलहेतुत्वोपपत्तेः । मोक्षायैवेति चेत्स्व+कर्मणां कृतानामीश्वरे संन्यासो मोक्षायैव न फलान्तराय । योगसहितो योगाच्च भ्रष्ट इत्यतस्तं प्रति नाशाशङ्का युक्तेवेति चेन्न । "एकाकी यतचित्तात्मा निराशीरपरिग्रहः" "ब्रह्मचारिव्रते स्थितः" इति च गृहस्थवानप्रस्थयोः कर्मसंन्यासविधानात् । न चात्र ध्यानकाले स्त्रीसहायाशङ्का येनैकाकित्वं विधीयते । न च गृहस्थस्य निराशीरपरिग्रह इति वचनमनुकूलम् । "विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः" "सर्वारम्भपरित्यागी"

'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' ॥

इति तत्र तत्र वचनानि दर्शितानि । तैर्विरुध्यते चतुर्थाश्रमप्रतिषेधः । तस्मान्मुनेर्योगमारुरुक्षोः प्रपन्नगार्हस्थ्यस्याग्निहोत्रादि फलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वेन सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति संन्यासी च योगी चेति स्तूयते ॥ ३ ॥

अथ तद्योगी कदा योगारूढो भवतीत्युच्यते—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

यदा समाधानचित्तो योगी हि यस्मादिन्द्रियार्थेष्विन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु । कर्मसु नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जते । अनु-

+ स्वकर्मणामित्यादीति चेदित्यन्तं पूर्वोक्तस्यैव मोक्षायैवेत्यादेर्विवरणमिति भाति ।

१ क. °न्यस्येत्' । २ ग. °स्यतेऽतः । ३ क. ख. ग. घ. ङ. °ति स्वक° । ४ ख. ग. ङ. °योगेन यो° ।

षक्तं कर्तव्यताबुद्धिं न करोतीत्यर्थः। सर्वसंकल्पसंन्यासी सर्वान्संकल्पानिहामुत्रार्थकामहेतून्संन्यसितुं शीलं यस्य स सर्वसंकल्पसंन्यासी। योगारूढः प्राप्तयोग इत्येतत्। तदा तस्मिन्काल उच्यते सर्वसंकल्पसंन्यासीति। भगवद्वचनात्सर्वान्कामान्सर्वाणि कर्माणि च संन्यसेदित्यर्थः। संकल्पमूला हि सर्वे कामाः।

संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः।
काम जानामि ते मूलं संकल्पात्किल जायसे॥
न त्वां संकल्पयिष्यामि समूलो विनशिष्यसि॥ इति स्मृतेः।

सर्वसंकल्पपरित्यागे सर्वकर्मपरित्यागः सिद्धो भवति। "स यथाकामो भवति तत्क्रतुर्भवति[1] तत्कर्म कुरुते" इत्यादिश्रुतिभ्यः। "यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्" इति स्मृतिभ्यश्च। न्यायाच्च। सर्वसंकल्पसंन्यासे न हि कश्चित्स्पन्दितुमपि शक्तः। तस्मात्सर्वसंकल्पसंन्यासवचनात्सर्वान्कामान्सर्वाणि च कर्माणि त्याजयति च भगवान्॥ ४॥

यदैवं योगारूढस्तदाऽऽत्माऽऽत्मनोद्धृतो भवति संसारादनर्थपदादयम्—

उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५॥

उद्धरेत्संसारसागरे निमग्नमात्मानमात्मना तत ऊर्ध्वं हरेद्योगारूढतामापादयेदित्यर्थः। नाऽऽत्मानमवसादयेन्नाधो नयेत्। आत्मैव हि यस्मादात्मनो बन्धुः संसारमुक्तये भवति। बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहनिबन्धनायतनत्वात्। तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति। आत्मैव रिपुः शत्रुर्योऽन्योऽपकारी बाह्यः शत्रुः सोऽ(प्यात्मप्रयुक्त एवेति युक्तमवधारणमात्मैव रिपुरात्मन इत्युक्तम्॥ ५॥

तत्र किंलक्षण आत्मनो बन्धुः किंलक्षणो वा रिपुरात्मन इत्यत्रोच्यते—

बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः।
अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत्॥ ६॥

बन्धुरात्माऽऽत्मनस्तस्याऽऽत्मा तस्याऽऽत्मनो बन्धुः। येनाऽऽत्मैवाऽऽत्मना जित आत्मा कार्यकरणसंघातः कार्यं शरीरं करणानीन्द्रियाणि। येन[2] स्वीकृतो जितेन्द्रिय इत्यर्थः। अनात्मनस्तु शत्रुभावे वर्तेताऽऽत्मैव शत्रुवत्। यथा शत्रुरात्मनोऽपकारी तथाऽऽत्माऽऽत्मनोऽपकारे वर्तेतेत्यर्थः॥ ६॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः॥ ७॥

---

१ क. ०ति तत्क्रतुर्भवति सं०। २ क. येनात्मा०।

जितात्मनः प्रशान्तस्य कार्यकरणसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः। प्रशान्तस्य परमात्मा समाहितः साक्षादात्मभावेन वर्तत इत्यर्थः। किंच शीतोष्णसुखदुःखेषु तथा मानापमानयोः पूजापरिभवयोः समस्य ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं विज्ञानं विशेषतो ज्ञानं स्वानुभवकरणं ताभ्यां तृप्तात्मा कूटस्थोऽप्रकम्प्यो भवतीत्यर्थः। विजितेन्द्रियश्चेदृशो युक्तः समाहितः स उच्यते समलोष्टाश्मकाञ्चनः ॥ ८ ॥

किंच—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

श्लोकार्धमेकं पदम्। सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्ता। मित्रं स्नेहवान्। अरिः शत्रुः। उदासीनो न कस्यचित्पक्षं भजते। मध्यस्थो विरुद्धयोरुभयोर्हितैषी। द्वेष्य आत्मनोऽप्रियः। बन्धुः संबन्धीत्येतेषु साधुषु शास्त्रार्थानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः कः किं कर्मेत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते योगारूढानां सर्वेषां युक्तम इत्यर्थः ॥ ९ ॥

अत एवायमुक्तफलप्राप्तये—

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

योगी स्वाध्यायी युञ्जीत समादध्यात्सततमात्मानमन्तःकरणम्। रहसि स्थित एकान्ते गिरिगुहादौ स्थितः सन्। एकाकयसहायः। एकाकीति विशेषणात्संन्यासं कृत्वेत्यर्थः। यतचित्तात्मा निराशीर्वितृष्णोऽपरिग्रहश्च परिग्रहरहितः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन्युञ्जीतेत्यर्थः ॥ १० ॥

अथेदानीं योगं युञ्जानस्याऽऽहारादीनां योगसाधनत्वेन नियमो वक्तव्यः। प्राप्तयोगस्य लक्षणं फलं चेत्यादि वक्तव्यमित्येतदारभ्यते। तत्राऽऽसनमेव तावत्प्रथममुच्यते—

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥

शुचौ विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मन आसनं नात्युच्छ्रितं नातिनीचं तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्चोत्तरा यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरम्। विपरीतक्रमः ॥ ११ ॥

चैलाजिनकुशोत्तरं प्रतिष्ठाप्य किम्—

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

तत्र तस्मिन्नासन उपविश्य योगं युञ्ज्यात् । कथं, सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्यत्राऽऽह—आत्मविशुद्धये । अन्तःकरणस्य विशुद्ध्यर्थमित्येतत् ॥ १२ ॥

बाह्यमासनमुक्तमधुना शरीरधारणमुच्यते—

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

समं कायशिरोग्रीवमिति । कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवम् । तत्समं धारयन् । अचलं समं धारयतोऽपि चलनं भवतीत्यतो विशिनष्टि—अचलमिति । स्थिरः स्थिरो भूत्वेत्यर्थः । संप्रेक्ष्य सम्यक्प्रेक्षणं संदर्शनं कृत्वेवेतीवशब्दो लुप्तो द्रष्टव्यः । स्वनासिकाग्रसंप्रेक्षणमिह न विधीयते, किं तर्हि चक्षुषोर्दृष्टिसंनिपातः । स चान्तःकरणसमाधानापेक्षो विवक्षितः । संप्रेक्षणमेव चेद्विवक्षितं तर्हि मनस्तत्रैव समाधीयेत । आत्मनि हि मनःसमाधानं वक्ष्यति—आत्मसंस्थं मनः कृत्वेति । तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टिसंनिपात एव संप्रेक्ष्येत्युच्यते । दिशश्चानवलोकयन् । दिशां नावलोकनं कुर्वन्नित्येतत् ॥ १३ ॥

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

प्रशान्तात्मा विगतभीर्विगतभयो ब्रह्मचारिव्रते स्थितो ब्रह्मचारिणां व्रतं ब्रह्मचर्यगुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन्स्थितस्तदनुष्ठाता भवेदित्यर्थः । किंच मनः संयम्य मनसो वृत्तिमुपसंहृत्य मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः । युक्तः समाहितः सन्नासीतोपविशेत् । मत्परः कश्चिद्रागी स्त्रीचित्तोऽपि न स्त्रियमेव परत्वेन गृह्णाति । किं तर्हि राजानं महादेवं वा । अयं तु मच्चित्तो मत्परश्च ॥ १४ ॥

अथेदानीं योगफलमुच्यते—

युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

युञ्जन्मनःसमाधानं कुर्वन्नेवं यथोक्तेन प्रकारेण योगी नियतमानसो नियतं संयतं

---

१ ग. °प्रेक्ष्या वि° ।

मानसं यस्य स शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षः परमा निष्ठा यस्याः शान्तेस्तां निर्वाणपरमां मत्संस्थां मदधीनामाधिगच्छति प्राप्नोति ॥ १५ ॥

योगिन आहारादिनियम उच्यते—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

नात्यश्नत इति । आत्मसंमितमन्नमतीत्याश्नतः । "अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात्" इति श्रुतेः । तस्माद्योगी नाऽऽत्मसंमितादधिकं न्यूनं वाऽश्नीयात् । अथवा योगिनो योगशास्त्रपरिमितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्तीत्युक्तम् ।

अर्धमन्नस्य सव्यञ्जनस्य तृतीयमुदकस्य तु ।
वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥

इत्यादि परिमाणम् । तथा न चातिस्वप्नशीलस्य योगो भवति चार्जुन ॥ १६ ॥

कथं पुनर्योगो भवतीत्युच्यते—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

युक्ताहारविहारस्य । आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणावाहारविहारौ यस्य । तथा नियता चेष्टा यस्य कर्मसु । युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा । सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥ १७ ॥

अथाधुना कदा युक्तो भवतीत्यत्रोच्यते—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यदा विनियतमिति । यदा विनियतं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यमात्मन्येव केवलमवतिष्ठते । स्वात्मनि स्थितिं लभत इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता स्पृहा दृष्टादृष्टविषयेभ्यस्तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा ॥ १८ ॥

योगिनः समाहितस्योपमोच्यते—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

यथा दीपो निवातस्थः । निवाते वातवर्जिते देशे स्थितो नेङ्गते न चलति । सोपमा । उपमीयतेऽनयेत्युपमा, स्मृता योगज्ञैश्चित्तप्रकारदर्शिभिश्चिन्तिता । योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगं समाधिमनुतिष्ठत इत्यर्थः ॥ १९ ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीप इव यत्र यस्मिन्काल उपरमते चित्तमुपरतिं गच्छति । निरुद्धं सर्वतो निवारितप्रचारम् । योगसेवया योगानुष्ठानेन । यत्र चैव यस्मिंश्च काल आत्मनाऽऽत्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवाऽऽत्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

किंच—

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥

सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकमत्यन्तमित्यर्थः । यत्तद्बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतं तद्विषयजनितमित्यर्थः । वेत्ति तादृशं सुखमनुभवति यत्र यस्मिन्काले । न चैवायं विद्वानात्मस्वरूपे स्थितस्तस्माच्चलति तत्त्वतस्तत्त्वस्वरूपात्प्रच्यवत इत्यर्थः ॥ २१ ॥

किंच —

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ २२ ॥

यमात्मानं लब्ध्वा प्राप्यापरं लाभं न मन्यते लाभान्तरं न मन्यते न चिन्तयति । किंच यस्मिन्नात्मैकत्वे स्थितो दुःखेन शस्त्रपातादिलक्षणेन गुरुणाऽपि गरीयसाऽपि न विचाल्यते ॥ २२ ॥

यत्रोपरमत इत्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेष उक्तः—

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

तं विद्याद्दुःखसंयोगवियोगम् । दुःखेन संयोगो दुःखसंयोगस्तेनासंयोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतं विद्यादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारम्भेण कर्तव्यतोच्यते निश्चयानिर्वेदयोः साधनत्वविधानार्थम् । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्यः । अनिर्विण्णचेतसा । न निर्विण्णमनिर्विण्णं किं तच्चेतस्तेन निर्वेदरहितेन चित्तेनेत्यर्थः ॥ २३ ॥

किंच—

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवास्तान्कामांस्त्यक्त्वा परित्यज्य सर्वा-नशेषतो निःशेषं निर्लेपम् । किंच मनसैव विवेकयुक्तेन, इन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियतं कृत्वा समन्ततः समन्तात् ॥ २४ ॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥

शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् । केन, बुद्ध्या धृतिगृहीतया धैर्ययुक्तये-त्यर्थः । आत्मसंस्थमात्मनि स्थितमात्मैव सर्वं न ततोऽन्यत्किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् । एष योगस्य परमोऽवधिः ॥ २५ ॥

तत्रैवाऽऽत्मसंस्थं मनः कृत्वा प्रवृत्तो योगी—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चल(र)ति निर्गच्छति स्वभावदोषादेतन्मन-श्चञ्चलमत एवास्थिरं ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्यैतन्निमित्तयाथात्म्य-निरूपणेनाभावीकृत्य वैराग्यभावनया वाऽऽत्मन्येव वशमेति ( शं नयेत् ) । तथाऽऽ-(था)[सति]त्मन्येव प्रशाम्यति ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

प्रशान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निर-तिशयमुपैत्युपगच्छति । शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः । ब्रह्मभूतं जीव-न्मुक्तं ब्रह्मैव सर्वमित्येव सर्वनिश्चयं ब्रह्मभूतमकल्मषमधर्मवर्जितम् ॥ २७ ॥

युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

युञ्जन्नेवं यथोक्तेन क्रमेण सदाऽऽत्मानं योगी विगतकल्मषो विगतपापः सुखेनाना-यासेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

इदानीं योगसाफल्यं ब्रह्मैकत्वदर्शनं प्रदर्श्यते—

सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

---

१ घ. °षादात्मन° । २ ङ. देव त° । ३ क. ख. ङ. °मित्तं या° । घ. °मित्ताया° । ४ क. ख. घ. ङ. °या चाऽऽत्म° ।

सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वात्मानं सर्वभूतानि च ब्रह्मादीन्यात्मन्येकतां गतानीक्षते पश्यति। योगयुक्तात्मा समाहितान्तःकरणः सर्वत्रसमदर्शनः॥ २९ ॥

तस्यैकात्मकत्वदर्शनस्य फलमुच्यते—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

यो मां वासुदेवं सर्वत्र सर्वभूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि। स च मे न प्रणश्यति न परोक्षी भवति। तस्य च मम चैकात्मकत्वात्। स्वात्मा हि नामाऽऽत्मनः प्रकाश एव भवति। यस्माच्चाहमेव सर्वैकात्मकत्वदर्शीत्येतत्॥ ३० ॥

पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते—

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

सर्वभूतस्थितमित्यादिना। सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि विष्णौ परदेवते वर्तते नित्ययुक्त एव सः। न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः॥ ३१ ॥

किंच—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

आत्मा स्वयमेवोपमा तद्भाव आत्मौपम्यं तेनाऽऽत्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन। किं पश्यतीत्यत्रोच्यते—यथा मम सुखमिष्टं तथा प्राणिनां सुखमनुकूलम्। वाशब्दश्चार्थे। यदि वा यथा च दुःखं मम प्रतिकूलमनिष्टं तथा सर्वप्राणिनामनिष्टं प्रतिकूलमित्येवं स्वौपम्येन सुखदुःखे चानुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति न कस्यचित्प्रतिकूलमाचरति। अहिंसक इत्यर्थः। एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परम उत्कृष्टो मतोऽभिमतश्चिन्तित इत्यर्थः॥ ३२ ॥

सर्वैर्योगिना(णा)मेतस्य यथोक्तस्य समदर्शनलक्षणस्य योगस्य दुःसंपादतामालक्ष्य शुश्रूषुस्तत्प्राप्त्युपायमर्जुन उवाच—

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥

योऽयं योगस्त्वया प्रोक्तः साम्येन। एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः स्थितिं स्थिरामचलाम्॥ ३३ ॥

---

१ घ °वं सर्वस्याऽऽत्मानं स° । २ क. ख ग. घ. ङ. मोक्षममि° । ३ क. घ. °तै° सर्वथा ।

प्रसिद्धमेतत्—

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

कृष्णेति कर्षतेर्विलेखनार्थस्य । योगिभक्तजनपापादिदोषकर्षणात्कृष्ण । न केवलमत्यर्थं चञ्चलं मनः प्रमाथि च प्रमथनशीलम् । प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति नरं वशी करोति । किंच बलवन्न केनाचिन्नियन्तुं शक्यम् । किंच दृढं तन्तुनागवत् । तस्यैवंभूतस्य मनसोऽहं निग्रहं निरोधं मन्ये वायोरिव सुदुष्करम् । यथा वायोर्दुष्करो निग्रहस्तथा दुष्करं मन्य इत्यभिप्रायः ॥ ३४ ॥

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

×असंशयं नास्ति संशयो मनो दुर्निग्रहं चलमित्यत्र । किं त्वभ्यासेन । अभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्यया वृत्तिः । वैराग्यं दृष्टादृष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन वैराग्येण च गृह्यते विक्षेपरूपप्रकारश्चित्तस्य । एवं तन्मनो गृह्यते निरुध्यत इत्यर्थः ॥ ३५ ॥

यः पुनरसंयतात्मा तेन—

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

अभ्यासवैराग्याभ्यामसंयतान्तःकरणोऽसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखसंप्राप्य इति मे मतिः । यस्तु पुनर्वश्यात्मा तेन वश्यात्मनाऽभ्यासवैराग्याभ्यां वश्यत्वमुपपादित आत्मा मनो यस्य सोऽयं तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतो यथोक्तादुपायात् ॥ ३६ ॥

तत्र योगाभ्यासाङ्गीकारेण परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि । योगस्य फलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशङ्क्याऽऽहार्जुनः—

अर्जुन उवाच—

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

अयतिरिति । अप्रयत्नवान्योगमार्गे श्रद्धयाऽऽस्तिक्यबुद्ध्या चोपेतो योगादन्तकाले चलितं मानसं मनो यस्य स चलितमानसो नष्टस्मृतिरप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

---

× एतस्मात्प्राक् "भगवानुवाच" इत्यधिकं ङ. पुस्तके ।

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥

कच्चिदुभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विभ्रष्टश्छिन्नाभ्रमिव न नश्यति। किंचाप्रतिष्ठो निराश्रयो हे महाबाहो विमूढो ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ३९ ॥

एतन्मे= संशयं कृष्ण च्छेत्तुमर्हसि। अशेषतस्त्वदन्यस्त्वत्तोऽन्य ऋषिर्वा देवो वा छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते। नास्तीत्यर्थः ॥ ३९ ॥

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥

×पार्थ नैवेह लोके नामुत्र परस्मिँल्लोके वा विनाशस्तस्य विद्यते नास्ति। नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः। स योगभ्रष्टे नास्तीति। न हि यस्मात्कल्याणकृच्छुभकृत्कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात तारयिताऽऽत्मानं पुत्ररूपेणेति पिता तात उच्यते। पितेव पुत्र इति पुत्रोऽपि तात उच्यते। गच्छति प्राप्नोति ॥ ४० ॥

किं तस्य भवति, योगमार्गे प्रवृत्तः संन्यासी—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

सामर्थ्यात्प्राप्य गत्वा पुण्यकृतामग्निष्टोमादियाजिनां लोकांस्तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरांस्तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां गेहे विभूतिमतां गृहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

अथवा श्रीमतां कुलादन्यस्मिन्योगिनामेव दरिद्राणां कुले मह(भव)ति जायते धीमताम्। एतद्धि जन्म दरिद्राणां योगिनां कुले दुर्लभतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥ ४२ ॥

यस्माच्च—

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

---

= अत्राऽऽर्षं क्लीबत्वम्। × एतस्मात्प्राक् "भगवानुवाच" इत्यधिकं ग. ङ. पुस्तकयोः।

तत्र योगिनां कुले तं बुद्धिसंयोगं लभते। पौर्वदेहिकं पूर्वदेहभवं पौर्वदेहिकं बुद्धिसं-योगं लभते। यतते च यत्नं करोति च। ततस्तस्मात्पूर्वकृतात्संस्काराद्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं कुरुनन्दन ॥ ४३ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

पूर्वजन्मनि कृतोऽभ्यासस्तेन पूर्वाभ्यासेन बलवता तेनैव ह्रियते हि यस्मात्प्राप्यते बुद्धिसंयोगं प्रत्यवशोऽपि स योगभ्रष्टः। किंच जिज्ञासुर्योगस्य ज्ञातुमिच्छया योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात्सोऽपि शब्दब्रह्म वेदोक्तं केवलं कर्मानुष्ठानमति-वर्तते। योगजिज्ञासाऽपि केवलात्कर्मणो गुरुतरेत्यभिप्रायः। किमुत बुद्ध्वा योगनि-ष्ठाभ्यासं कुर्वन् ॥ ४४ ॥

अतश्च योगित्वं श्रेय इति [प्रतिपादयति]—

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

प्रयत्नादधिकं प्रयतमान इत्यर्थः। ततो योगी विद्वान्संशुद्धकिल्बिषः संशुद्धपा-पोऽनेकेषु जन्मसु किंचित्किंचित्संशुद्धसंस्कारजातमुपचित्य तेनोपचितेन संस्कारेणा-नेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धः। ततो लब्धसम्यग्दर्शनः संन्यासी याति परां प्रकृष्टां गतिम्[1] ॥ ४५ ॥

यस्मादेवं तस्मात्—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥

तपस्विभ्योऽधिको योगी। ज्ञानमत्र शास्त्रपाण्डित्यं तद्वज्ज्ञानिभ्योऽपि मतो ज्ञानि-भ्योऽधिक इति। कर्मिभ्योऽग्निहोत्रादिकर्मिभ्यस्तद्वत्तेभ्योऽधिको योगी। तस्माद्योगी भवार्जुन ॥ ४६ ॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-
र्जुनसंवादे ध्यानयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

१ क. "तात्संस्कार"। २ ग. बुद्ध्वा।

योगिनामपि सर्वेषां रुद्रादित्यादिपराणां मद्गतेन वासुदेवे मयि समागतेनान्तरात्मनाऽन्तःकरणेन च श्रद्धावान्भजते यो मां स मे युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति ॥ ४७ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने षष्ठोऽध्यायः ॥ ६ ॥

( आदितः श्लोकानां समष्ट्यङ्काः—२८० )।

---

( अथ सप्तमोऽध्यायः )।

---

योगिनामित्यादिश्लोकेन प्रश्नबीजमुपन्यस्य स्वयमेवेदृशं मदीयं तत्त्वं मद्गतान्तरात्मा स्यादित्येतद्विवक्षुर्भगवानुवाच —

**श्रीभगवानुवाच—**

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

मय्यासक्तमनाः पार्थेत्यादि। मयि वक्ष्यमाणविशेषणे परमेश्वर आसक्तं मनो यस्य स मय्यासक्तमनाः। पार्थ योगं युञ्जन्मनःसमाधानं कुर्वन्मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयः। योगी पुरुषार्थेन केनचिदर्थी तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यते। अयं तु योगी मामेकमाश्रयं प्रतिपद्यते। हित्वाऽ+न्यत्साधनान्तरं मय्येवाऽऽसक्तमना भवति। यस्त्वेवंभूतः सोऽसंशयं समग्रं समस्तविभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं [ मां ] यथा यत्प्रकारेणैवमेवायं भगवानिति ज्ञास्यसि तच्छृणवथ वक्ष्यमाणं मया ॥ १ ॥

तच्च मद्विषयम्—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवयुक्तमिदं वक्ष्याम्यशेषतः। तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय। यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञातव्यमवशिष्यते। तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः। ततो विशिष्टफलत्वाद्दुर्लभं ज्ञानम् ॥ २ ॥

---

+ अन्यत्साधममिति पठितुं युक्तम्।

---

१ ग. 'भिति श्लो'।

कथमित्यत्रोच्यते—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति सिद्धये सिद्ध्यर्थम् । तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय यतन्ते । तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत् ॥ ३ ॥

श्रोतारं प्ररोचनेनाभिमुखीकृत्याऽऽह--

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

भूमिर्गन्धतन्मात्रमापो रसतन्मात्रमनलो रूपतन्मात्रं वायुः स्पर्शतन्मात्रं खं शब्दतन्मात्रम् । मन इति मनसः कारणमहंकारो बुद्धिर्महान्बुद्धिरित्यहंकारो महानहंकारोऽव्यक्तमहंकार इत्यविद्यासंयुक्तामित्यव्यक्तम् । ननु प्रसिद्धं भूम्यादिशब्दैर्महाभूतानां ग्रहणं युक्तम् । मनःशब्देनापीन्द्रियस्य । बुद्ध्यहंकारशब्दाभ्यामध्यवसायवृत्तेरभिमानवृत्तेश्च ग्रहणम् । नैवमुपपद्यते । प्रकृतिरिति च वक्ष्यमाणत्वात् । इतीयं मे ममेश्वरस्य शक्तिभूत'ऽविद्यात्मिका भिन्ना विभक्ता प्रकृतिः कारणमष्टप्रकारम् ॥४॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

अपरा निकृष्टाऽशुद्धा[1] बन्धात्मिकेत्यर्थः । इयं यथोक्ता । इतोऽन्या अन्या-न्तरा[2]मान्तरभूतां मे ममेश्वरस्य परां प्रकृष्टां जीवभूतामात्मभूतां महाबाहो ययेदं धार्यतेऽन्तःप्रविष्टया जगत् ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

एषा परापरत्वेन विभक्ता प्रकृतिर्योनिः कारणं येषां तान्येतद्योनीनि भूतानि सर्वाणीत्युपधारयावगच्छ । अतः परं(र)प्रकृतिरूपेण स्थितोऽहं विश्वस्य जगतः प्रभव उत्पत्तिस्थानं प्रलयस्तथा ॥ ६ ॥

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

मत्तः परमेश्वरात्पर[तर]मन्यत्किंचिन्नास्ति । धनंजय मयि सर्वाधारे सर्वमिदं प्रोतं स्यूतं सूत्रे मणिगणा इव ॥ ७ ॥

---

१ घ. °द्धातिम° । २ ङ. °न्तर° ।

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

रसो माधुर्यमहमप्सु कौन्तेय। प्रभा प्रकाशोऽस्म्यहं भवामि शशिसूर्ययोः। प्रणव ओंकारः सर्ववेदेषु। शब्दः ख आकाशे। पौरुषं पुंस्त्वं पुंबुद्धिर्नृषु पुरुषेषु ॥ ८ ॥

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**

पुण्यो गन्धः सुरभिः पृथिव्यां च। तेजो दीप्तिश्चास्मि विभावसौ वह्नौ। जीवनं प्राणः सर्वभूतेषु। तपश्च स्वधर्म(र्मश्चा) चास्मि तपस्विषु ॥ ९ ॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**

बीजं प्ररोहणसमर्थं मां सर्वभूतानां विद्धि। पार्थ सनातनं चिरंतनम्। बुद्धिर्बुद्धिमतामस्मि। तेजः प्रागल्भ्यं तेजस्विनामहम् ॥ १० ॥

**बलं बलवतां चाहं कामरागविवर्जितम्।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

कामरागविवर्जितम्। कामश्च रागश्च ताभ्यां विवर्जितम्। कामो दृश्यमानेषु तृष्णा, स्मर्यमाणेषु राग इति विशेषः। धर्माविरुद्धो भूतेषु प्राणिषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

ये चैव सात्त्विकाः सत्त्वगुणनिर्वृत्ता भावाः प्राणिनो राजसा रजोगुणनिर्वृत्तास्तामसास्तमोगुणनिर्वृत्ताश्चैते मत्त एवेश्वराज्जातास्तान्विद्धि। यद्यप्येवं न त्वहं तेषु तद्वशोऽहं न भवामि। ते मयि मद्वशा इत्यर्थः ॥ १२ ॥

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

त्रिभिर्गुणमयैः सत्त्वरजस्तमोमयैर्भावैः प्राणिभिरेभिः सर्वमिदं जगद्वर्तते। मम मायया मोहितं नाभिजानाति मामेभ्यो गुणेभ्यः परं कारणत्वेन स्थितमव्ययम् ॥ १३ ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

देवस्य ममेश्वरस्य विष्णोः स्वभावभूता दैव्यप्राकृता। हि यस्मादेषा गुणमयी गुणात्मिका मम माया दुरत्यया दुस्तरा तस्मान्मामेव ये प्रपद्यन्ते शरणं गच्छन्ति मायामेतां तरन्ति ते ॥ १४ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

न मां दुष्कृतिनः पापकर्माणो मूढाः प्रपद्यन्ते न शरणं गच्छन्ति नराधमा मायया मदीययाऽपहृतज्ञाना अपहृतं तिरोहितं ज्ञानं येषां तेऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १९ ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

चतुर्विधाश्चतुष्प्रकारा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो दुःखी । ज्ञातुमिच्छुर्जिज्ञासुः । अर्थार्थी । ज्ञानी, आत्मवित् । भरतर्षभ ॥ १६ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

तेषां मध्ये ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते श्रेयान् । प्रियो हि ज्ञानिनोऽत्यर्थमतिशयेनाहं, स च मम प्रियः ॥ १७ ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

उदारा उत्कृष्टाः सर्व एवैत आर्तादयः । ज्ञानी त्वात्माऽहमेवेत्यभिप्रायः । आस्थितः संप्राप्तः । स हि ज्ञानी युक्तात्मैकाग्रचित्तो मामेवानुत्तमां गतिम् ॥ १८ ॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

बहूनां जन्मनामन्तेऽवसाने ज्ञानवान्मां प्रपद्यते वासुदेवः सर्वमिति प्रतिपद्यमानः । स च महात्मा सुदुर्लभः ॥ १९ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

कामैर्बहुविधैरपहृतज्ञानाः प्रपद्यन्त आश्रयन्तेऽन्यदेवता मद्व्यतिरिक्ताः । तं तं नियमं व्रतमास्थायाऽऽश्रित्य प्रकृत्या स्वभावेन नियता वशीकृताः स्वयाऽऽत्मीयया ॥२०॥

यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

यो यो यां यां तनुं देवताविग्रहं श्रद्धयाऽर्चितुमिच्छति तस्य तस्याचलां निश्चलां श्रद्धां तामेव तद्विषयां विदधामि करोम्यहम् ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हितान् ॥ २२ ॥

स तया विहितया श्रद्धया युक्तस्तद्देवताविशेषस्याऽऽराधनमीहते करोति । लभते च तत आराधनात्कामानीप्सितान्मयैव विहितान्हितान्मयैव दत्ताननुकूलान् ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

अन्तवत्त्वन्तो विनाशो विद्यते यस्य तदन्तवत्फलं तु तेषां देवतान्तरपूजकानामल्पमेधसामल्पबुद्धीनाम् । देवानभिमतान्देवान्यजन्तीति देवयजो यान्ति गच्छति । मयि भक्ता मद्भक्ता यान्ति मामपि । तस्मादनन्त(न्तं) पूजाफलम् ॥ २३ ॥

किंनिमित्तं भगवन्तं विहाय देवतान्तरं यजन्तीत्यर्जुनवचनमाशङ्क्याऽऽह—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

अव्यक्तमविद्यमानव्यक्तिभावमिमं संसारिपुरुषवदा(द्व्य)[क्तिमा]पन्नं प्राप्तं मन्यन्ते जानन्ति मामबुद्धयोऽविवेकिनो लौकिका जनाः । मम परं प्रकृष्टं परमात्मभावमजानन्तोऽचिन्तयन्तोऽव्ययमविनाशिनमनुत्तमं निरुत्तमम् । तं (अतो) मां विहाय देवतान्तरं पूजयन्ति ॥ २४ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

नाहं प्रकाशः सर्वस्य लोकस्य केषांचिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः । गुणैर्योग एव माया, योगमायासमावृतो मूढोऽयमविवेकी लोको नाभिजानाति मामजमव्ययमुत्पत्तिविनाशरहितम् ॥ २५ ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

वेद जानाम्यहं समतीतान्यतिक्रान्तानि वर्तमानानि चार्जुन । भविष्याणि भावीनि च भूतानि पदार्थान्मां तु वेद विजानाति न कश्चन न कोऽपीति ॥ २६ ॥

इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥

इच्छाद्वेषसमुत्थेन प्रकाशितेन द्वंद्वमोहेन सुखं मे स्याद्दुःखं मे मा भूदित्येवमर्थरूपेण द्वंद्वमोहेन सर्वाणि भूतानि संमोहं भ्रमं सर्गे सृष्टौ यान्ति परंतप ॥ २७ ॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

येषां त्वन्तगतं पापं दुष्कृतं जनानां पुण्यकर्मणां ते पुण्यकर्माणो द्वंद्वमोहनिर्मुक्ता द्वंद्वभ्रमरहिता भजन्ते सेवन्ते मां दृढव्रता दृढसंकल्पाः ॥ २८ ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति प्रयतन्ते ये ते ब्रह्म तद्विदुर्विजानन्ति कृत्स्न मध्यात्ममध्यात्मभूतं प्रत्यगात्मभूतं कर्म चाखिलं समस्तम् ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

साधिभूताधिदैवमधिभूताधिदैवैः सहितं साधियज्ञं यज्ञसहितं च ये विदुर्विजानन्ति प्रयाणकाले मरणकाले चापि मां ते विदुर्विजानन्ति युक्तचेतस इति ॥ ३० ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने सप्तमोऽध्यायः ॥ ७ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—२१०)।

---

( अथाष्टमोऽध्यायः )।

---

ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवताऽर्जुनस्य प्रश्नबीजान्युपक्षिप्तान्यतस्तत्प्रश्नार्थमर्जुन उवाच—

**अर्जुन उवाच—**

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

किं तद्ब्रह्मेत्यादिना ॥ १ ॥ २ ॥

एषां प्रश्नानां निर्णयार्थं भगवानुवाच—

**श्रीभगवानुवाच—**

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अक्षरं न क्षरतीत्यक्षरं परमात्मरूपं तद्ब्रह्मेत्युच्यते। "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्येषा श्रुतिः। तस्यैवास्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावोऽध्यात्ममुच्यते। आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तमध्यात्मशब्देनोच्यत इत्यर्थः। भूतानां प्राणिनां भावो भूतभावस्तस्योद्भवमुत्पत्तिं करोतीति भूतभावोद्भवकरः। विसर्गो यागो देवतोद्देशेन द्रव्यत्यागरूपत्वात्। स यागः कर्मसंज्ञितस्तस्य भूतभावोद्भवकरत्वम् "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते" इत्यादिस्मृतेः॥ ३॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर॥ ४॥

अधिभूतं प्राणिजातमधिकृत्य भवतीति। तदेव दर्शयति—क्षरो भावः। क्षरति विनश्यतीति क्षरो भावो वस्तु। विनाशि वास्त्वित्यर्थः। पुरुषः पूर्णमनेन सर्वमिति पुरि शयनाद्वाऽऽदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानुग्राहकः। स एवंभूतः पुरुषोऽधिदैवतमित्युच्यते। अधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्ण्वाख्या। "यज्ञो वै विष्णुः" इति श्रुतेः। अत्र देहे कर्ममये शरीरे देहभृतां वर॥ ४॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥ ५॥

अन्तकाले मरणकाले च मामेव विष्ण्वाख्यं स्मरन्मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति म्रियते स मद्भावं विष्णुभावं वैष्णवं पदं यातीत्यत्र संशयो नास्ति॥५॥

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥ ६॥

यं यं वाऽपि स्मरन्भावं पदार्थं तेन भावेन भावितः॥ ६॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः॥ ७॥

तस्मात्सर्वेषु कालेष्विति। स्पष्टोऽर्थः॥ ७॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्॥ ८॥

अभ्यासयोगयुक्तेनेति। अभ्यस्यत इत्यभ्यासः। अभ्यासश्चासौ योगश्चेत्यभ्यासयोगस्तेन युक्तेनाभ्यासयोगयुक्तेन परमं श्रेष्ठतमं दिव्यमप्राकृतं पार्थानुचिन्तयन्याति तं नान्यगतिमित्यर्थः॥ ८॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः।

---

१ क. ख. घ. ङ. °स्मरत्वभा°।

सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं पुरातनमनुशासितारं सर्वप्राणिनां स्वधर्मस्थितिनिमित्तमणोरणीयांसं सूक्ष्मादपि सूक्ष्मतरमनुस्मरेद्यः सर्वस्य धातारमचिन्त्यरूपमचिन्त्यं रूपं यस्य तमादित्यवर्णं प्रकाशरूपं तमसः परस्तात्परतो वर्तमानम् ॥ ९ ॥

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्य-
क्स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

प्रयाणकाले मनसाऽचलेन। चलनवर्जितेन भक्त्या युक्तो योगबलेन चैव योगस्य बलं योगबलं तेन भ्रुवोर्मध्ये प्राणमावेश्य व्यवस्थाप्य सम्यग्यथाशास्त्रं स तं परं ब्रह्म पुरुषमात्मानं दिव्यमुपैति ॥ १० ॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

अक्षरं न क्षरतीत्यक्षरम् । "एतस्य वा अक्षरस्य प्रशासने गार्गि" इति श्रुतेः । वेदविदो वदन्ति विशन्ति प्रविशन्ति ब्रह्मचर्यं ब्रह्मचारिव्रतं चरन्त्यनुतिष्ठन्ति। संग्रहेण संक्षेपेण प्रवक्ष्ये ॥ ११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

सर्वद्वाराणि नव द्वाराणि संयम्य सम्यग्वशीकृत्य हृदि हृत्पुण्डरीके मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितः प्रवृत्तो योगधारणां योगाभ्यासं धारयितुं तत्रैव धारयेत् ॥ १२ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥

ओमित्येकाक्षरं प्रधानाक्षरमित्यर्थः । ब्रह्म ब्रह्मप्राप्तिहेतुत्वाद्व्याहरन्नुच्चारयन्मामनुस्मरन्प्रयाति प्रतीक्ष्य (म्रिय)ते त्यजन्देहं परमां गतिं याति ॥ १३ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

अनन्यचेता यो मां स्मरति नित्यशः । सुलभः सुखेन लभ्यः । नित्ययुक्तस्य नित्यं युक्तो नित्ययुक्तस्तस्य योगिनः ॥ १४ ॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

संसिद्धिं परमां मोक्षम् ॥ १५ ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

॥ १६ ॥

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥

सहस्रयुगपर्यन्तं युगसहस्रप्रमाणं ब्रह्मणो यदहस्तद्युगसहस्रप्रमाणं विदुः । ब्रह्मणो रात्रिमपि युगसहस्रान्तामहोरात्रविदो जना ज्ञानिन एवं विदुः ॥ १७ ॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

अव्यक्तात्प्रकृतेर्व्यक्तयो महदाद्याः प्रभवन्ति—अहनि आह्नि संजायन्ते । रात्र्यागमे रात्रौ प्रलीयन्ते लयं गच्छन्ति तत्रैवाव्यक्तसंज्ञके प्रकृतौ ॥ १८ ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

भूतग्रामो भूतसमूहः । भूत्वा भूत्वा प्रलीयत उत्पद्योत्पद्य विनश्यति । अवशः परवशः प्रभवत्युत्पद्यते । अहरागमोऽह्न आगमः ॥ १९ ॥

परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

पर उत्कृष्टः । तस्माद्भूतग्रामात् । भावः पदार्थः । व्यक्तो नित्यसिद्धः । अव्यक्तात्प्रकृतेः । सनातनो नित्यः । यो भावः सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

अव्यक्तः प्रत्यक्षादिप्रमाणागोचरः । अक्षर इत्युक्तस्तमव्यक्तमाहुः । यं भावं प्राप्य न निवर्तन्ते[1] संसारमवतरन्ति । तत्परमं धाम मम ॥ २१ ॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

---

१ ख. 'न्ते न सं' ।

यस्यान्तःस्थानि भूतानि, अन्तास्तिष्ठन्तीत्यन्तःस्थानि । येनाव्यक्तेनेदं सर्वं ततं व्याप्तम् ॥ २२ ॥

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

यत्र काले त्वनावृत्तिमपुनरागमनमावृत्तिं पुनरागमनं यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

अग्निर्ज्योतिरहर्दिवा शुक्लः पूर्वपक्षः । षण्मासा उत्तरायणाख्याः । तत्र तस्मिन्मार्गे प्रयाताः शरीरं त्यक्त्वा गच्छन्ति ब्रह्म ब्रह्माणम् । ब्रह्मविदो हिरण्यगर्भोपासकाः। अग्निर्ज्योतिर्ब्रह्मलोकाभिमुखस्याऽऽतिवाहकदेवतोच्यते । अहरित्यहरभिमानिनी देवता । असावातिवाहिक्यग्नेः परमतिवहति । शुक्लपक्षाभिमानिनी देवता साऽहः(ह्नः) परमतिवहति । उत्तरायणाभिमानिनी देवता सा शुक्लपक्षात्परमतिवहति । उत्तरायणमेव योगिनं ब्रह्म प्रापयति ॥ २४ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

धूमो रात्रिश्चन्द्रलोकाभिमुखस्य कर्मिणः स्वर्गं प्रापयति साऽऽतिवाहिकी देवतोच्यते। धूमो धूमाभिमानिनी देवता । रात्री राज्याभिमानिनी देवता । साऽप्यातिवाहिकी धूमात्परमतिवहति । तथा कृष्णपक्षाभिमानिनी देवता रात्रेः परमतिवहति । षण्मासा दक्षिणायनमातिवाहिकी देवता कृष्णपक्षात्परमतिवहति । गृहीत्वा गच्छतीत्यर्थः । तत्र प्रयाताः कृष्णकर्माणः चन्द्रमस इदं चान्द्रमसं ज्योतिः कर्मणा योगी प्राप्य निवर्तते। पुनः शरीरान्तरं मनुष्यलोके गृह्णातीत्यर्थः ॥ २५ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥

शुक्ला च कृष्णा च शुक्लकृष्णे गती मार्गौ । ज्ञानप्रकाशयुक्तस्य योगिनः शुक्लपक्षो गतिः । ज्ञानप्रकाशरहितस्य कर्मिणः कृष्णपक्षो गतिः । जगत इति योगिनः कर्मिणश्चोच्यन्ते । शाश्वते नित्ये प्रवाहनित्यत्वात् । एकया यात्यनावृत्तिमपुरावृत्तिं ब्रह्मलोकस्थितिमन्ययाऽऽवर्तते पुनरागच्छति मनुष्यलोके । तत्र प्रयाता गच्छन्ति [ब्रह्मेत्यत्र] परमेव कथं न गृह्यते; तत्र परस्मिन्ब्रह्मणि प्रयाणनिषेधात्। "अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्ति । अत्रैव

समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेः। "तद्धै तत्पश्यन्नृषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च" इति ॥ २६ ॥

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

नैते सृती मार्गौ जानन्नवगच्छन्योग्युपासकः कश्चन कोऽपि मुह्यति क्रमादर्चिरादिमार्गेण ब्रह्मलोकमुत धूमादिमार्गेण पितृलोकमि(मे)ति ॥ २७ ॥

शृणु योगस्य माहात्म्यम्—

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम्।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाऽऽद्यम् ॥ २८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

---

वेदेषु सम्यगधीतेषु यज्ञेषु यथावदनुष्ठितेषु तपःसु चान्द्रायणादिषु तप्तेषु दानेषु च यत्पुण्याख्यं फलमुपदिष्टमत्येत्यातिवर्तते तत्सर्वमिदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तमर्थजातं योगी परं प्रकृष्टं स्थानमुपैति प्राप्नोति चाऽऽद्यमादौ भवं परं ब्रह्मेत्यर्थः ॥ २८ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्यानेऽष्टमोऽध्यायः ॥ ८ ॥

---

(आदितः श्लोकानां समष्टयङ्काः—३३८)।

---

(अथ नवमोऽध्यायः)।

---

सप्तप्रश्ननिर्णयानन्तरमर्जुनायै तं(सं)प्रत्यष्टमैमप्यर्थमुपदेष्टुं भगवानुवाच—

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

---

१ ख. ग. 'सक्तो न क'। २ क. ग. घ. ङ. 'य यत्प्रस'। ३ क. ख. ग. 'मप्य'।

इदं वक्ष्यमाणं तव गुह्यतमं रहस्यतमं प्रवक्ष्यामि । अनसूयवे । गुणेषु दोषाविष्करणमसूया । ज्ञानमवबोधं विज्ञानसहितमनुभवयुक्तम् । यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

विद्यानां राजा राजविद्येयं ब्रह्मविद्या । राजगुह्यं विवस्वदादिभी राजभी रक्षितत्वात् । पवित्रं पावनं प्रत्यक्षावगमं स्वानुभवं धर्म्यं धर्मादनपेतं सुसुखं कर्तुं सुखेनानुष्ठेयमव्ययमविनाशि ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

अश्रद्दधानाः श्रद्धारहिताः पुरुषा धर्मस्यास्य ज्ञानलक्षणस्यानुष्ठानेऽश्रद्दधाना इति संबन्धः । अप्राप्य मां परमात्मानं निवर्तन्ते प्रत्यागच्छन्ति । मृत्युयुक्तसंसार एव वर्त्म तत्र मृत्युसंसारवर्त्मनि ॥ ३ ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

मया ततं व्याप्तमिदं सर्वं जगत् । अव्यक्ता मूर्तिर्यस्य सोऽव्यक्तमूर्तिस्तेन मयेश्वरेणेन्द्रियागोचरस्वरूपेणेत्यर्थः । मत्स्थानि सर्वभूतानि सर्वप्राणिनः । न चाहं तेषु भूतेषु व्यवस्थितः ॥ ४ ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥ ५ ॥

न च मत्स्थानि भूतानि । मयि तिष्ठन्तीति मत्स्थानि । न चेमानि भूतानि मत्स्थानि । "असङ्गो न हि सज्जते" इति श्रुतेः । पश्याऽऽलोकय मे योगमैश्वरमीश्वरसंबन्धिनम् । भूतानि बिभर्तीति भूतभृत् । न च भूतस्थो न च भूतेषु [तिष्ठति] । ममेश्वरस्याऽऽत्मा भूतभावनो भूतान्युत्पादयतीति भूतभावनः ॥ ५ ॥

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

यथाऽयं दृष्टान्त आकाशस्थितोऽचलो नित्यं सर्वकालं वायुः सर्वत्रगो महान्महापरिमाणः सर्वभूताधारत्वेन तथा तद्वत्सर्वाणि भूतानि मत्स्थानि मयि स्थितानीत्युपधारयावगच्छ ॥ ६ ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

सर्वभूतानि कौन्तेय मामिकां प्रकृतिं प्रसवधर्मिणीं यान्ति गच्छन्ति। तत्र लीयन्त इत्यर्थः। कल्पक्षये कल्प्यते सृज्यत इति कल्पो महदादिप्रपञ्चस्तस्य क्षयो महाप्रलयस्तत्र। पुनस्तानि भूतानि कल्पान्तरादौ विसृजामि ॥ ७ ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

प्रकृतिं स्वामवष्टभ्याऽऽश्रित्य विसृजामि पुनः पुनर्भूयो भूयः। अवशं परवशं प्रकृतेर्वशात्प्राधान्यात् ॥ ८ ॥

किंचान्यत्—

न च मां तानि कर्माणि निबध्नन्ति धनंजय।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

न च मां तानि कर्माणि निबध्नन्ति। नेति प्रकृतेन संबन्धः। धनंजय। जगदुत्पत्तिस्थापनसंहारकर्माणि बन्धहेतवो न भवन्तीत्यर्थः। कुत इत्यत्राऽऽह—उदासीन उपेक्षकस्तद्वदासीनमपक्षपातेनाऽऽसीनमसक्तं फलसङ्गरहितं तेषु सृष्टिस्थितिसंहारेषु कर्मसु। अतोऽवगम्यते फलासङ्गरहितं कर्माणि न निबध्नन्तीति ॥ ९ ॥

आत्मन उदासीनत्वं दर्शयितुमाह—

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥

मयाऽध्यक्षेण साक्षिणा प्रकृतिः सूयते सचराचरं स्थावरजङ्गमभूतसहितम्। हेतुना निमित्तमात्रेणानेनेश्वरेण जगद्विपरिवर्तते संत्यज्यते (संप्रवर्तते(?)) संह्रियते वेत्यर्थः ॥ १० ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

अवजानन्ति मां मूढा अज्ञा मानुषीं मनुष्योचितां तनुं शरीरमाश्रितमधिष्ठितं परं प्रकृष्टं भावमनुभावमजानन्तोऽनवगच्छन्तो ममेश्वरस्य भूतमहेश्वरं भूतानि प्राणिनस्तेषां महान्तमीश्वरम् ॥ ११ ॥

कथंभूतास्तेऽजानन्त इत्यत्राऽऽह—

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

मोघा आशा येषां ते मोघाशा मोघप्रार्थना मृगतृष्णाजलपिपासा(सु)वत्। मोघानि

१ ख. ग. 'प्रसवस्त'।

कर्माणि येषां ते मोघकर्माणो मृगतृष्णोदकपानार्थगन्तृवत् । मोघं ज्ञानं येषां ते मोघज्ञाना मृगतृष्णाजलज्ञातृवत् । विचेतसो विगतविवेकाः । रक्षसामियं राक्षसी प्रकृतिस्तामसी । असुराणामियमासुरी प्रकृती राजसी । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

महात्मानोऽक्षुद्रान्तःकरणा मामीश्वरं पार्थ । देवानामियं दैवी सात्त्विकी तामाश्रिता भजन्ति सेवन्ते । अनन्यमनसः । न विद्यत ईश्वरादन्यत्र मनो येषां तेऽनन्यमनसो ज्ञात्वाऽवगत्य भूतादिं मां सकलभूतान्तःकरणमव्ययं विनाशरहितम् ॥ १३॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

सततं सर्वकालं कीर्तयन्तो भाषमाणा यतन्तो यतमाना दृढव्रता दृढं व्रतं येषां ते दृढव्रता नमस्यन्तो नमस्कारं कुर्वन्तो मामीश्वरं भक्त्या प्रीत्या नित्ययुक्ता उपासते सेवन्त इत्यर्थः ॥ १४ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

ज्ञानयज्ञेन ज्ञानमेवेश्वरविषयं यज्ञस्तेन यज्ञेन च । अन्येऽपरे जन्तवो यजन्तः पूजयन्तो मामीश्वरमुपासते सेवन्ते । एकत्वेनैकमेव परं ब्रह्मेति । पृथक्त्वेनेन्द्रामित्रवरुणादित्यादिरूपेण । बहुधा बहुप्रकारैर्व्यवस्थितम् । तथा विश्वरूपेण विश्वतोमुखं तथा विश्वरूपधरं विश्वतोमुखम् ॥ १५ ॥

कथमेकस्यैव भगवतो बहुविधत्ववचनमित्याशङ्क्याऽऽत्मनो बहुविधत्वं दर्शयितुमाह—

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।
मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम् ॥ १६ ॥

अहं क्रतुः सोमयागप्रभेदोऽग्निष्टोमादिः । अहं यज्ञोऽहरहः क्रियमाणो देवयज्ञादिः । अहं स्वधा पितृपूजात्मको यज्ञः स्वधेत्युच्यते पितृयज्ञादिः । अहमौषधं यद्व्याध्यादिनिवृत्त्यर्थमुपयुज्यते तदौषदं हरीतक्यादि । मन्त्रोऽहं येन देवेभ्यो हविर्दीयते यजुरादिः स मन्त्रः । अहमेवाऽऽज्यं घृतम् । अहमग्निः, यत्र हविर्हूयते स आहवनीयादिः । अहं हुतं होमस्तदप्यहम् ॥ १६ ॥

---

१ क. ख. ङ. °त्वाऽऽनुग° । ग. °त्वाऽऽनुगम्य भू° ।

पिताऽहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥

पिता जनकोऽहमस्य जगतः। माता चाहं धाता दाता कर्मफलस्य प्राणिभ्यः। पितामहः पितुः पिता। वेद्यं वेदितव्यम्। पवित्रं पावनम्। ओंकारः। ओमिति ब्रह्मेति श्रुतेः। ऋङ्मन्त्रविशेषः। साम मन्त्रविशेषः। एवं यजुर्मन्त्रविशेषः ॥१७॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

गतिः कर्मफलम्। भर्ता पोष्टा। प्रभुः स्वामी। साक्षी प्राणिनां शुभाशुभस्य कर्मणः। निवासो यस्मिन्प्राणिनो निवसन्ति। शरणं प्राणिनामार्तिहरम्। सुहृत्प्रत्युपकारानपेक्ष उपकारी। किंच प्रभव उत्पत्तिस्थानं जगतः। प्रलयो यस्मिन्प्रलीयते सोऽहम्। जगत्तिष्ठत्यस्मिन्निति स्थानमहम्। निधानं जगतो यत्कालान्तरोपभोगाय निधीयते तदहमिति। बीजं जगतः प्ररोहणसमर्थमव्ययं बीजमिति संबन्धः ॥१८॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

तपाम्यादित्यो भूत्वा कैश्चिद्रश्मिभिरष्टौ मासान्वर्षं निगृह्णामि। पुनश्च कैश्चिद्रश्मिभिश्चतुरो मासानुत्सृजाम्यहम्। अमृतमेवाहं देवानाम्। मृत्युश्च मर्त्यानाम्। यस्य यत्संबन्धितया विद्यमानं तत्स(त्त)द्विपरीतमसन्न पुनरत्यन्तमेवासत्कार्यकारणे सदसती ॥ १९ ॥

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥

त्रैविद्या ऋग्यजुःसामविदो मां सर्वेश्वरं सोमपाः सोमयाजिनः पूतपापाः क्षालितकल्मषा यज्ञैरग्निष्टोमादिभिरिष्ट्वाऽऽराध्य स्वर्गतिं स्वर्गलोकप्राप्तिं प्रार्थयन्त आशासते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति भुञ्जते दिव्यानप्राकृतान्देवभोगान् ॥ २० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

ते स्वर्गिणो विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं यथोक्तेन

प्रकारेण त्रयीधर्ममृग्यजुःसामवेदोक्तधर्ममनुप्रपन्ना आश्रिता गतागतं गमनागमनं विषयान्कामान्कामयन्त इति कामकामा लभन्ते प्राप्नुवन्ति ॥ २१ ॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

न विद्यते मत्त ईश्वरादन्य उपास्यो येषां तेऽनन्याश्चिन्तयन्तो ये नराः पर्युपासते तेषां मयीश्वरे नित्याभियुक्तानां योगश्च क्षेमश्च योगक्षेमं वहामि बिभर्म्यहम् ॥२२॥

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

ये पुरुषा अन्यदेवताभक्ता अन्यस्यां देवतायां भक्ता यजन्ते तेऽपि मां परमेश्वरमेव पूजयन्ति । अविधिपूर्वकमज्ञानपूर्वकमिति ॥ २३ ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

अहं वासुदेवः सर्वेषां यज्ञानां भोक्ता च प्रभुः स्वाम्येव च । न तु मामभिजानन्ति तत्त्वेन परमार्थतः । अतः कारणाच्च्यवन्ति च्यवन्ते फलाद्भ्रश्यन्ति ते यज्विनः॥२४॥

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥

देवेषु व्रतं येषां ते देवव्रता देवान्यान्तीति प्रकृतेन संबन्धः । पितॄनग्निष्वात्तादिबर्हिषदादीन् । पितृव्रताः पितृषु व्रतं यज्ञो येषां ते पितृव्रताः । भूतानि मद्रकालीप्रभृतीनि यान्ति । भूतेष्विज्या येषां ते भूतेज्याः । मद्याजिनो मां परमेश्वरं यष्टुं शीलं येषां ते मद्याजिनः । तेऽपि मां यान्तीति संबन्धः ॥ २५ ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥

भक्त्या प्रयच्छति ददाति तदहं भक्त्या दत्तमश्नामि भुञ्जे । प्रयतात्मनः प्रयतः शुद्ध आत्मा यस्य तस्य प्रयतात्मनो भक्तस्य संबन्धि पत्रादि द्रव्यं मम प्रीतये भवतीत्यर्थः ॥ २६ ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

यत्करोषि यल्लौकिकं वैदिकं वा कर्म करोषि यदश्नास्योदनादि भुङ्क्षे यदाज्यादि जुहोषि देवतार्थं यद्धिरण्यादिकं ददासि यत्कृच्छ्रचान्द्रायणादिकं तपश्चरसि तत्सर्वं कौन्तेय कुरुष्व मदर्पणं मदाराधनम् ॥ २७ ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

एवं मदर्पणानुष्ठाने सति शुभाशुभफलैः पुण्यपापफलैर्मोक्ष्यसे मुक्तो भविष्यासि कर्माण्येव बन्धनानि तैः कर्मबन्धनैः। संन्यासयोगयुक्तात्मा संन्यास एव योगस्तेन युक्तात्मा त्यक्तफलासङ्ग इत्यर्थः। कर्मबन्धनैर्विमुक्तो मां नित्यमुक्तं वासुदेवमुपैष्यसि प्राप्स्यसि ॥ २८ ॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥

समस्तुल्यचित्तोऽहं वासुदेवः सर्वभूतेषु सर्वप्राणिषु मम द्वेष्यो नास्तीति प्रकृतेन संबन्धः। न प्रियः प्रियोऽपि नास्तीति। ये तु मां भजन्ति सेवन्ते मामीश्वरं भक्त्या प्रीत्या मयीश्वरे ते निवसन्ति। अहमपि तेषु वसामि ॥ २९ ॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः। ३० ॥

सुदुराचारोऽपि मामीश्वरं भजते चेदन्यं न भजतीत्यनन्यभाक्साधुरेव धार्मिक एव स मन्तव्यो बोद्धव्यः। हि यस्मादर्थे। सम्यक्शोभनं व्यवसितो निश्चितस्तस्माद्धार्मिक एव स मन्तव्य इत्यभिप्रायः ॥ ३० ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

क्षिप्रं शीघ्रं भवति जायते। धर्मात्मा धर्मस्वरूपः। शश्वन्नित्यां शान्तिं मोक्षलक्षणां निगच्छति प्राप्नोति ॥ ३१ ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥

[मां] हि यस्मात्पार्थ व्यपाश्रित्य येऽपि स्युर्भवेयुः पापयोनयः पापिष्ठजन्मानः। स्त्रियो वैश्याश्च शूद्राश्च तेऽपि यान्ति परां गतिं मोक्षम् ॥ ३२ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥

किं पुनर्वक्तव्यं ब्राह्मणाः पुण्या धर्मात्मानो भक्ता ईश्वरं प्रपन्नाः राजर्षयः परां गतिं यान्तीत्यत्र किमु वक्तव्यमित्यभिप्रायः। तस्मादनित्यमसुखं सुखरहितं लोकं पुरुषार्थसाधनमिमं मानुषं प्राप्याधिगम्य भजस्व सेवस्व मामीश्वरम् ॥ ३३ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

---

मन्मना मयि मनो यस्य स मन्मना भव जायस्व । मयि भक्तिर्यस्य स मद्भक्तः । मां यष्टुं शीलं यस्येति स मद्याजी भवेति संबन्धः । मामीश्वरं नमस्कुरु वन्दस्व । एवं मन्मना भूत्वा मामेवैष्यसि प्राप्स्यसि । युक्त्वा समाधाय । एवमुक्तेन प्रकारेणाऽऽत्मानम् । मत्परायणः । अहमेव वासुदेवः परमयनमाश्रयो यस्य स मत्परायणः । एवमात्मानं युक्त्वा मत्परायणश्च भूत्वा मामेवैष्यसीति संबन्धः ॥ ३४ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने नवमोऽध्यायः ॥ ९ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—३७२)।

---

(अथ दशमोऽध्यायः )।

---

एवमर्जुनाय विज्ञानसहितं ज्ञानं साक्षान्मोक्षसाधनमुपदिश्येदानीं येषु भावेषु चिन्तनीयो भगवांस्ते भावा भगवत्तत्त्वं च प्रागुक्तमपि दुर्विज्ञानत्वात्पुनर्वक्तव्यमिति कृत्वा भगवानुवाच—

श्रीभगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

भूय एव भूयोऽपि महाबाहो शृणवाकर्णय । मे मम परमं श्रेष्ठं वचनम् । यद्वचस्ते तुभ्यं प्रीयमाणाय तर्प्यमाणाय वक्ष्याम्यभिधास्यामि । हितकाम्यया हितेच्छया ॥ १ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

न मे विदुर्विजानन्ति सुरगणाः प्रभवमुत्पत्तिं न महर्षयः । ममोत्पत्तिं सुरगणा

महर्षयश्च न जानन्तीत्यर्थः । अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वेषाम् । यस्माद्देवानां सर्वेषां महर्षीणां चाहमादिः कारणं तस्माद्देवा महर्षयश्च ममोत्पत्तिं न जानन्तीत्यर्थः ॥ २ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

यो मां परमेश्वरं जन्मरहितं च वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरमसंमूढः संमोहरहितः स मर्त्येषु मनुष्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥

बुद्धिः सूक्ष्मावबोधसामर्थ्यम् । ज्ञानं पदार्थावबोधः । असंमोह उपस्थितप्रतिपत्तिसामर्थ्यम् । क्षमाऽऽक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता । सत्यं यथादृष्टश्रुतार्थप्रतिपादनम् । दमः कर्मेन्द्रियोपरतिः । शमोऽन्तःकरणोपरतिः । सुखमाह्लादः । दुःखं तापः । भव उद्भवः । अभावस्तद्विपर्ययः । भयं त्रासः । अभयं तद्विपर्ययः ॥ ४ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

अहिंसाऽपीडा प्राणिनाम् । समता समचित्तता । तुष्टिः संतोषः । तप इन्द्रियनिग्रहपूर्वकः कायक्लेशः । दानं यथाशक्ति संविभागः । यशो धर्मनिमित्ता कीर्तिः । अयशोऽधर्मनिमित्ताऽकीर्तिः । भवन्ति जायन्ते । भावाः पदार्थाः । भूतानां प्राणिनाम् । मत्तः परमेश्वरात् । एवावधारणे । नान्येभ्य इत्यभिप्रायः । पृथग्विधाः पृथक्प्रकाराः ॥ ५ ॥

किंच—

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

महर्षयो भृग्वादयः । पूर्वे पूर्वकालसंबन्धिनः । चत्वारो मनवः सावर्णिकादयः । मत्तः सद्भावो येषां ते मद्भावा मच्छक्त्यात्मानः । मनसि भवा मानसाः । येषां महर्षीणां मनूनां च सृष्टिजा लोक इमाः प्रजाः स्थावरजङ्गमलक्षणाः ॥ ६ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

एतां विभूतिं विस्तारं योगं च विभूतिहेतुभूतं मदीयं यो वेत्ति तत्त्वतो यथावत्सोऽविकम्पेन योगेन समाधिना युज्यते ॥ ७ ॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

प्रभव उत्पत्तिकारणम् । मत्तः परमेश्वरात्सर्वं क्रियाकारकफलरूपं जगत्प्रवर्तत इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वार्थाः । भावस्तत्त्वार्थाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः ॥ ८ ॥

इत्थम्—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

मच्चित्ता मद्गतचित्ता मद्गतप्राणा मयि व्यवस्थितप्राणा मद्गतजीवना बोधयन्तोऽन्योन्यं कथयन्तो मामीश्वरं निरतिशयज्ञानबलवीर्यसंपन्नं रमन्ति च प्रियसंगमेनेव ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

तेषां सततयुक्तानां नित्याभियुक्तानां प्रीतिपूर्वकं स्नेहपूर्वकं भजताम् । बुद्धियोगं तं येन बुद्धियोगेन मामीश्वरमुपयान्ति ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

अज्ञानजमविवेकजं तमो मिथ्याप्रत्ययरूपमात्मभावस्थो ज्ञानदीपेन ज्ञानमेव दीपो ज्ञानदीपस्तेन भास्वता [ नाशयामि ] ॥ ११ ॥

भक्तानामन्तःकरणस्थो भास्वता ज्ञानदीपेन विवेकमिथ्याप्रत्ययरूपं तमो नाशयामीति भगद्वचनं श्रुत्वा महान्तमनुग्रहमात्मनि मन्यमानोऽन्यमप्यभिमतमर्थं मम वक्ष्यतीति मत्वा प्रष्टुकामोऽर्जुन उवाच—

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

परं ब्रह्म भवान् । परं धाम परमं तेजो भवान् । परमं पवित्रं पावनं भवान् ॥ १२ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥

स्वयं चैवाऽऽत्मानं ते(?) ॥ १३ ॥

---

१ घ. ङ. च ।

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।

न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥

वचनात्तत्त्ववचनो यथोक्तं सर्वमृतं सत्यं मन्ये । व्यक्तिमुत्पत्तिम् ॥ १४ ॥

स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।

भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

स्वयमेवाऽऽत्मनैव । भूतानि भावयतीति भूतभावनस्तस्य संबोधनम् ॥ १५ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।

याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

आत्मविभूतयो दिव्या अप्राकृतास्तस्मात्स्वयमेव वक्तुमर्हसि ॥ १६ ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।

केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥

कथं विद्यां विजानीयाम् । भावेषु पदार्थेषु ॥ १७ ॥

विस्तरेणाऽऽत्मनो योगं विभूतिं च जनार्दन ।

भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

विस्तरेणाऽऽत्मनो योगं विभूतिं विस्तरम् । अमृतं [ शृण्वतः ] ॥ १८ ॥

श्रीभगवानुवाच—

श्रीभगवानुवाच—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।

प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

हन्तेति । हन्त ते प्राधान्यतः प्राधान्यात् ॥ १९ ॥

अहमात्मा गुडाकेश सर्वभूताशयः स्थितः ।

अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

गुडाः पिण्डीकृताः केशा यस्य स गुडाकेशः । सर्वाणि भूतान्याशयो यस्य स सर्वभूताशयः ॥ २० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।

मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

द्वादशादित्यानां मध्ये विष्णुरहम् । तेजसां मध्ये रविरहम् । मरुतां देवानां मध्ये मरीचिरहम् । नक्षत्राणां मध्येऽहं शशी । ननु नक्षत्राणां मध्ये शशिनो निर्धारणं नोपपद्यते । कस्मात्, अनक्षत्ररूपत्वात् । नैतदेवम् । शशी च नक्षत्रमेव । कथम् । इह

---

१ घ. क. 'नाच यथो' ।

ण्यतः फलभोगार्थममुं लोकं नक्षत्रं ते ( नक्षन्ति ) गच्छन्तीति नक्षत्रम् । तथा हि श्रुतिः—"यो वा इह यजमानोऽमुं लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्" इति ॥२१॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

वेदानां सामवेदोऽस्मि । भूतानां कार्यकारणसंघानां संबन्धिनी चेतना ॥ २२ ॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

रुद्राणामेकादशानां शंकरश्चास्मि । वित्तेशो वैश्रवणः । वसूनां मध्ये पावकोऽस्मि ॥ २३ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

पुरोधसां च मुख्यं मां बृहस्पतिं सुरगुरुम् ॥ २४ ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

महर्षीणां भृगुरहम् । गिरां वाचां मध्य एकमक्षरं प्रणवोऽस्मि ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

॥ २६ ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

प्रजनः प्रजनयिता ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

यादसां जलौकसाम् । संयमतां संयमनं कुर्वताम् ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

कलयतां विच्छेत्तॄणाम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

पवतां गच्छताम्। रामो दाशरथिरहम्। झषा हिंस्रजलचराः ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

सर्गाणां सृष्टीनामादिरन्तश्च मध्यं च सृष्टिस्थितिसंहाराः। प्रवदतां संबन्धी वादोऽहम्। प्रमाणतर्कसाधनोपालम्भासिद्धान्ताविरुद्धः पञ्चावयवत्वोपपन्नपक्षप्रतिपक्षपरिग्रहो वादः ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥

समासे भवः सामासिको द्वंद्वः। धाता कर्मफलभावनार्ह ईश्वरः। विश्वतोमुखो विश्वरूपः ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

पर एवेश्वरः सर्वहरो मृत्युरुच्यते। प्रलये सर्वहरणात्। भविष्यतामुद्बुभूषतामुद्भवोऽभ्युदयोऽहम्। स्वरूपेण कथनं कीर्तिः। श्रीर्लक्ष्मीः। वाक्सरस्वती। स्मृतिः स्मरणशक्तिः। मेधा धारणाशक्तिः। धृतिर्धैर्यम्। क्षुत्पिपासादिसहनं क्षमा।

अक्रुष्टोऽभिहतो वाऽपि नाऽऽक्रोशेन्नैव ताडयेत्।
अदुष्टो वाङ्मनःकायैः सा क्षमा परिकीर्तिता ॥

एता उत्तमाः स्त्रियोऽहं, यासामाभासमात्रसंबन्धेन लोकः कृतार्थमात्मानं मन्यते ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम्।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

बृहत्साम नाम साम्नां प्रधानं साम। गायत्री छन्दोविशिष्टानामृचां गायत्र्यृगहम्। कुसुमाकरो वसन्तर्तुः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

छलयतां छद्मगतीनां द्यूतमस्मि। जेतॄणां जयोऽस्मि। व्यवसायिनां व्यवसायोऽस्मि। सत्त्ववतां सात्त्विकानां सत्त्वमहमस्मि ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

वृष्णीनां वासुदेवोऽस्मि। मुनीनां मननशीलानां सकलपदार्थतत्त्वज्ञानिनां, कवीनां क्रान्तदर्शिनाम् ॥ ३७ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

दमयितॄणां संबन्धी दण्डोऽस्मि, अदान्तानां दमनकारणम् । जिगीषतां जिगीषूणां नीतिरस्मि । नीतिः षाड्गुण्यम् । गुह्यानां गोप्यानां गुप्तिहेतुर्मौनमस्मि ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥

बीजं प्ररोहकारणम् । न तदिति संक्षेपमाह । मया विना यत्स्याच्चराचरं चरमचरं वा न तदस्ति ॥ ३९ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

॥ ४० ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥

तेजसोंऽशस्तेजोंशः । [स] संभवः कारणं यस्य तत्तेजोंशसंभवम् ॥ ४१ ॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

---

अथवा बहुनैतेनैवमादिना किं ज्ञातेन तवार्जुन स्यात्सावशेषेण । अशेषतस्त्वमिदं शृणु । अहमेकेन सूक्ष्मांशेनेदं कृत्स्नं जगद्विष्टभ्य व्याप्य स्थित इति मन्तव्यम् ॥ ४२ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने दशमोऽध्यायः ॥ १० ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—४१४ ) ।

---

( अथैकादशोऽध्यायः ) ।

---

एवं भगवन्मुखात्संक्षेपविस्तराभ्यां विभूतिं श्रुत्वा पररूपं द्रष्टुकामोऽर्जुन उवाच—

अर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

अध्यात्मसंज्ञितमध्यात्मप्रतिपादकं वचनमभ्युपचारेणाध्यात्मसंज्ञितमित्युच्यते ॥१॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

भवाप्ययावुत्पत्तिप्रलयौ ॥ २ ॥

एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वरम्।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

ईश्वरस्येदमैश्वरम् ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयाऽऽत्मानमव्ययम् ॥ ४ ॥

योगशब्दात्समाधिवचनादर्शआदित्वादच्प्रत्ययः। योगो विद्यते येषां ते योगाः। योगानामीश्वरो योगिनामीश्वरो योगेश्वरस्तस्य संबोधनम् ॥ ४ ॥

एवमर्जुनेन स्वरूपदर्शनं प्रार्थितं तद्दर्शयितुकामो भगवानुवाच—

श्रीभगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

शतशः शतानि। सहस्रशः सहस्राणि। नानावर्णाकृतीनि नानाविधवर्णसंस्था-[ना]नि ॥ ५ ॥

पश्याऽऽदित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याऽऽश्चर्याणि भारत ॥ ६ ॥

॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

इह मम देहे। गुडाका निद्रा। तस्या ईश्वरः स्वामी गुडाकेशः। जितनिद्र इत्यर्थः ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

॥ ८ ॥

संजय उवाच—

संजय उवाच—

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

एवमुक्त्वेति । राजन्निति धृतराष्ट्रस्य संबोधनम् । योगो विद्यते येषां ते योगाः । महायोगानामीश्वरो हरिः ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

अनेकवक्त्रनयनमनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे तदनेकवक्त्रनयनम् । अनेकानि च यान्यद्भुतान्यनेकाद्भुतानां दर्शनमुपलब्धिर्यत्र रूपे तद्रूपमनेकाद्भुतदर्शनम् । दिव्यान्यनेकान्युद्यतान्यायुधानि यत्र रूपे तद्दिव्यानेकोद्यतायुधम् ॥ १० ॥ ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

॥ १२ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

तत्र देवस्य शरीरे कृत्स्नं जगदनेकधा प्रविभक्तमेकस्थमपश्यदिति व्यवहितेन न्वयः ॥ १३ ॥

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवाऽऽदिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

॥ १४ ॥ १५ ॥ १६ ॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतोदीप्तिमन्तम् ।

---

१ क. घ. अनन्तबा° । २ घ. त्वां ।

पश्यामि त्वां[1] दुर्निरीक्ष्यं[2] समन्ता-
दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥
अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां[3] दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥
द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥
अमी हि त्वां[4] सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वां[5] विस्मिताश्चैव सर्वे ॥ २२ ॥

रुद्रादित्येति । विश्वे हि विश्वे देवाः । ऊष्मपाः पितरः ॥ २२ ॥

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥

॥ २३ ॥

---

१ घ. त्वा । २ क घ. 'रीक्षं स' । ३ घ. त्वा । ४ घ. त्वां । ५ घ. त्वां ।

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

नभ इति । व्यात्ताननं व्यात्तानि विवृतान्याननानि यस्यासौ व्यात्ताननः ॥२४॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

शर्म सुखम् ॥ २५ ॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥
यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

---

१ घ. त्वा । २ य. त्वा ।

तेजसा सर्वमास्वादयसि ॥ ३० ॥

आख्याहि मे को भवानुग्ररूपो
　नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
　न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

॥ ३१ ॥

अर्जुनस्य वचनं श्रुत्वा तस्योत्तरं श्रीभगवानुवाच—

श्रीभगवानुवाच—

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
　लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
　येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

कालोऽस्मीति । लोकानिह मच्छरीरे समाहर्तुं पिण्डीकर्तुं प्रवृत्तः । ऋतेऽपि [त्वा]त्वामन्तरेणापि न भविष्यन्ति ॥ ३२ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
　जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
　निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

॥ ३३ ॥

द्रोणं च भीष्मं च जयद्रथं च
　कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
　युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

द्रोणं चेति । जहि व्यापादय । मा व्यथिष्ठा मा शङ्किष्ठाः । भयचलने मा कार्षीरित्यर्थः । जेतासि जेष्यसि ॥ ३४ ॥

संजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
　कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाऽऽह कृष्णं
　सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

---

१ घ. त्वां ।

वेपमानः कम्पमानः । किरीट्यर्जुनः । सगद्गदं भीतभीतः प्रकारम्(?) ॥ ३५ ॥

एवं प्रणामपूर्वकं भगवन्तमर्जुन उवाच—

अर्जुन उवाच—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥

स्थाने युक्तम् । प्रकीर्त्या प्रकर्षेण कीर्त्येत्यर्थः ॥ ३६ ॥

कस्माच्च ते न नमेरन्महात्म-
न्गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

न नमेरन्न नमस्युः । अक्षरं ब्रह्म । सच्चासच्च सदसत्, सदसदात्मकमित्यर्थः । ताभ्यां सदसद्भ्यां परं यत्तदपि त्वम् ॥ ३७ ॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

निधीयतेऽस्मिन्निति निधानम् । वेत्ताऽसि वेदिताऽसि । धाम तेजः । ततं व्याप्तम् ॥ ३८ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

प्रजापतिर्दक्षः । पितामहो ब्रह्मा । तस्य पिता प्रपितामहः ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

पुरस्तादग्रतः । पृष्ठतः पश्चात् । सर्वतः पुरस्तात्पार्श्वतः पश्चाच्च । हे सर्व । अनन्तं

१ क. घ. ङ. °रं तत्परं य° ।

वीर्यं यस्य सोऽनन्तवीर्यस्तस्य संबोधनम् । अमितोऽपरिच्छिन्नो विक्रमः पराक्रमो यस्य सोऽमितविक्रमः । सर्वं व्याप्नोषि ततः सर्वो भवसि ॥ ४० ॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वाऽपि ॥ ४१ ॥

सखेति । प्रसभम् । तथा हे सखेत्यत्र* परलोपो द्रष्टव्यः । तवेदं तवेद(म)मित्यर्थः ॥ ४१ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

विहारः क्रीडा । एकोऽसहायो बहुजनप्रत्यक्षं क्षामये प्रसादये ॥ ४२ ॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४३ ॥

॥ ४३ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

तस्मादिति । प्रणिधाय प्रकर्षेण नीचैर्दण्डवद्भूमौ कायं निपात्य । सोढुमपचारान् ॥ ४४ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

हृषितो हृष्टरोमा ॥ ४५ ॥

---

* सखे इतीयवस्थायामितिशब्दस्य इकारः परशब्देन प्राह्यः । तस्य लोपः परलोपः ।

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

यथा पूर्वं दृष्टवानहं तथैव संयुक्तो भव ॥ ४६ ॥

इत्यर्जुनस्य वचनं श्रुत्वा श्रीभगवानुवाच--

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

आत्मयोगादात्मस्वरूपेण योगस्तस्मात् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

अध्ययनैरङ्गाध्ययनैः । न च क्रियाभिर्गुरुपारिचर्या[दि]भिः ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

॥ ४९ ॥

संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

॥ ५० ॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

इदं परमपदप्राप्तिकारणम् ॥ ५१ ॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥

॥ ५२ ॥ ५३ ॥ ५४ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥

---

अहं वासुदेवः परमं प्रधानं यस्य स मत्परमः ॥ ५५ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने एकादशोऽध्यायः ॥ ११ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—४६९ )।

---

( अथ द्वादशोऽध्यायः )।

---

एवं सुदर्शनं भगवद्रूपं प्रत्यक्षेणोपलभ्य तस्योपास्यत्वं च भगवद्वचनादेव श्रुत्वा किमेवं साकारं भगवद्रूपमुपास्यमाहोस्विदव्यक्तं ब्रह्मरूपमुपास्यमिति संशयानस्तन्निर्णयार्थमर्जुन उवाच—

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

सततयुक्ताः साकारध्याननिष्ठाः । योगवित्तमाः परमात्मवित्तमाः ॥ १ ॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

मयि भगवति साकारे विश्वरूपे ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

अनिर्देश्यमीदृशं तदिति निर्देष्टुमयोग्यमव्यक्तं प्रत्यक्षादिप्रमाणैरप्रतीयमानम् । कूटस्थं कूटः पर्वतस्तद्वत्तिष्ठतीति कूटस्थम् ॥ ३ ॥ ४ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

अव्यक्ता गतिरव्यक्तं ज्ञानम् ॥ ५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

अनन्यो न विद्यतेऽन्यद्यस्मिन्योगे सोऽनन्यः ॥ ६ ॥ ७ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय ॥ ९ ॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

॥ १२ ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

करुणा यस्यास्ति स करुणः । अर्शआदिभ्योऽच् ॥ १३ ॥ १४ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

उद्वेग क्षुचित्तता । अमर्षः क्रोधः ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ।
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

॥ १६ ॥ १७ ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

अनिकेतोऽगृहः ॥ १९ ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः । २० ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

धर्मादनपेतं धर्म्यममृतमिवोक्तमिदम् । व्याघ्रादित्वात्समासः ॥ २० ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने द्वादशोऽध्यायः ॥ १२ ॥

( आदितः श्लोकानां समष्टयङ्काः—४८९ ) ।

(अथ त्रयोदशोऽध्यायः)।

भूम्याद्यष्टविधा प्रकृतिरित्यपरेश्वरस्य शक्तिरूपा पुरा प्रतिपादिता—भूमिराप इत्यादिना ग्रन्थेन। तथेश्वरस्य स्वरूपभूता जीवभूता च परा प्रकृतिः प्रतिपादिता—अपरेयमितस्त्वन्यामित्यादिना ग्रन्थेन। तत्र तत्प्रकृतिद्वयं क्षेत्रक्षेत्रज्ञरूपमीश्वरस्य स्वरूपावबोधार्थमेव यथावदर्जुनाय वक्ष्यामीति [भगवानुवाच—]

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ १॥

सर्वम् (?)॥ १॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥ २॥

॥ २॥

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥ ३॥

तदिति प्रकृतं क्षेत्रं[1] निर्दिशति। यद्यदात्मकम्। चशब्दः समुच्चये। यादृग्यादृशं स्वकीयैर्धर्मैः[2]। चशब्दः पूर्ववत्। यद्विकारि विकारोऽस्यास्तीति विकारि। येन[3] विकारि[4]। सह सुपेति योगविभागात्समासः। येथा[5] यत्कार्यमुपपद्यत इति वाक्यशेषः। चशब्दः पूर्ववत्। तत्समासेन मे शृणु॥ ३॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥ ४॥

ऋषिभिर्वसिष्ठादिभिः। गायत्र्यादीनि च्छन्दांसि। तन्मन्त्रैर्विविधैर्नानाप्रकारैः पृथग्विवेकाद्गीतं दर्शितम्। किंच ब्रह्मणः प्रतिपादकानि सूत्राणि पदानि। पैद्यते[6] गैम्यत[7] एभिरिति॥ ४॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥ ५॥

अहंकारो महाभूतकारणं तत्कारणमव्यक्तमीश्वरशक्तिः। मम माया दुरत्ययेत्युक्तम्। पञ्च बुद्ध्युत्पादकत्वान्निवर्तकत्वात्। पञ्च बुद्धीन्द्रियाणि मनश्च (?) पञ्च

१ क. ख. ग. ङ. क्षेत्रज्ञं नि°। २ ख. °रि स°। ३ क. ग. ङ. °न यो°। ४ घ. °रि येनेति। ५ घ. यतो। ६ क. ख. घ. ङ. पद्यन्ते। ७ क. ख. घ. ङ. गम्यन्त।

चेन्द्रियगोचराः शब्दस्पर्शरूपरसगन्धाः । तान्येतानि सांख्याश्चतुर्विंशति(तिं) तत्त्वान्याचक्षते ॥ ५ ॥

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान् । संघातः कार्यकरणसंघातात्मकं शरीरम् । चेतना शरीरस्य नित्यसिद्धात्मचैतन्यप्रकाशः । धृतिरुत्साहः । एतदिति सर्वान्तःकरणधर्मोपलक्षणार्थम् । सविकारं विकारसहितम् । विकारा इन्द्रियाणि ॥ ६ ॥

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

मान आत्मश्लाघित्वं तदभावोऽमानित्वम् । दम्भो धर्माविष्करणं तदभावोऽदम्भित्वम् । क्षान्तिः क्षमा । आर्जवमृजुभावः । शुचित्वं शौचं शारीरमलशोधनम् । स्थैर्यं स्थिरत्वम् । आत्मविनिग्रहः शरीरस्य प्रवृत्तिनियमः ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

वैराग्यं शब्दादिविषयेषु । अनहंकारोऽहंकाराभावः । एवं च जन्मादिदोषदर्शनम् ॥ ८ ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

असक्तिः सङ्गाभावः । अनभिष्वङ्गोऽभिष्वङ्गोऽन्यस्मिन्नहंबुद्धिः ॥ ९ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

विविक्तदेशसेवित्वं रहस्यदेशसेवित्वम् ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

॥ ११ ॥

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

मत्परं मदात्मकम् ॥ १२ ॥

---

१ ख. ग. ङ. प्रकृतिनि° ।

सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

सर्वेन्द्रियव्यापाराणामाभासं(सः) प्रतिभासमात्रं यस्मिंस्तत्सर्वेन्द्रियगुणाभासम् । असक्तमसंबद्धं सर्वभ्रान्त्यधिष्ठानम् । निर्गुणं सत्त्वादिगुणरहितम् । गुणभोक्तृ च शब्दादिगुणविकाराणां शब्दादिविषयाणां भोक्तृ च[3] ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

बहिः शरीरादन्तश्च शरीरस्य ॥ १५ ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

अविभक्तमभिन्नमाकाशवत् । भूतभर्तृ स्थितिकाले । ग्रसिष्णु प्रलयकाले । प्रभविष्णूत्पत्तिकाले ॥ १६ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

तमसोऽज्ञानात्परमसंस्पृष्टम् । ज्ञानममानित्वादि । ज्ञेयमनादि मत्परं ब्रह्मेत्यादि । ज्ञेयं ज्ञानगम्यं प्राप्यं फलमित्यर्थः । ज्ञानेन गम्यं ज्ञानगम्यं फलम् । तत्त्रितयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् ॥ १७ ॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

[मद्भावाय] मम भावायोपपद्यते मोक्षं गच्छति ॥ १८ ॥

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

प्रकृतिमव्यक्तं पुरुषं क्षेत्रज्ञम् । विकारान्बुद्ध्यहंकारतन्मात्रा देहेन्द्रियादींश्च । [गुणान्] सत्त्वादीन्सुखदुःखमोहाकारपरिणतान् । तत्रैव हि[6] त्रयं विभाव्यते । यथार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—विद्धि प्रकृतिसंभवानिति ॥ १९ ॥

---

१ क. ङ. °राणां मायाभा° । २ ख. घ. °मायाभा° । ३ क. ग. घ. ङ. यत् । ४ घ. °काराद्गातृगान्देहे° । ५ क. ख. ग. घ. ङ. °वान् । ते° । ६ ग. °ति ॥१९॥ का°।

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

तेषां कार्यकारणकर्तृत्वे भोक्तृत्व उपलक्ष्यते ॥ २० ॥

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु। २१ ॥

पुरुषः प्रकृतिस्थो हि ॥ २१ ॥

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

उपद्रष्टा शरीरेन्द्रियेषु स्वविषयाभिव्यापृतेषु तद्विलक्षणस्तस्य कर्मणः समीपस्थ उपद्रष्टा। अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते। भर्ता देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपरस्यार्थेन निमित्तीभूतेन चैतन्याभासानां यत्स्वरूपं तच्चैतन्यात्मकमेवेति भर्ताऽऽत्मेत्युच्यते। भोक्ताऽग्न्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाश्चैतन्यग्रस्ता इव जायमाना विभक्ता इव विभाव्यन्त इति भोक्ताऽऽत्मेत्युच्यते। महानीश्वरो महेश्वरः। परमश्चासावात्मेति परमात्मा। देहेऽस्मिन्नव्यक्तात्परः पुरुषः ॥ २२ ॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

गुणैर्विकारैः ॥ २३ ॥

ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये सांख्येन योगेन कर्मयोगेन(ण) चापरे ॥ २४ ॥

चित्तस्याविच्छेदेनैकप्रकारता ध्यानं तेन। सांख्येन साक्षी नित्यो विलक्षण आत्मेति चिन्तनेन। योगेनानेनैव चिन्तनेन। कर्मयोगेने(णे)श्वरार्पितेनानुष्ठीयमानेन कर्मणा ॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

श्रुत्वाऽन्येभ्य उपासते यथाश्रुतं श्रुतिपरायणाः ॥ २९ ॥

---

१ ख. °तृत्वभो°। २ ख. °कृत्वोपलक्ष्येते। ३ ग. ॥ २० ॥ २१ ॥ ४ ख. °षयं प्रतिव्या°। ५ क. ख. °येकार° ६ ख. °प्रकृतिषु। ७ क. ख. घ. ङ. °द्धीनामसं°। ८ क. ख. घ. ङ. °थैं नि°।

यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

॥ २६ ॥ २७ ॥

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २८ ॥

न हिनस्ति न व्यापादयति ॥ २८ ॥

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ २९ ॥

प्रकृत्याऽविद्यया । सर्वशः सर्वप्रकारैः ॥ २९ ॥
पुनरपि सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयते—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

यदेति । एकस्थमेकस्मिन्नात्मनि स्थितम् । विस्तारं विकासम् ॥ ३० ॥

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

शरीरस्थः शरीर उपलभ्यमानः ॥ ३१ ॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३२ ॥

धूमतुषारादिभिर्नोपलिप्यते ॥ ३२ ॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥

॥ ३३ ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

भूतप्रकृतिर्माया तस्या मोक्षो भूतप्रकृतिमोक्षस्तम् ॥ ३४ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—५२३ )।

---

( अथ चतुर्दशोऽध्यायः )।

---

स्वतन्त्रपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणं[णत्वं] न तु सांख्यानामिव(?) गुणेषु च सङ्गः संसारकारणमित्युक्तम्। गुणेषु कथं सङ्गः के वा गुणाः कथं बध्नन्ति गुणेभ्यश्च मोक्षणं कथं स्यादित्येतत्प्रतिपादनार्थमुक्तलक्षणं वक्तव्यमित्येतमर्थं च भगवानुवाच--

श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

परं प्रकृष्टं भूयः पुनरपि ज्ञानाना[मुत्तम]मितो देहबन्धनात्। १ ॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

ममेश्वरस्य साधर्म्यं सधर्मताम्। न व्यथन्ति न चलन्ति ॥ २ ॥

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

मम मत्संबन्धिनी। [ योनिः ] प्रकृतिः। सर्वकार्यापेक्षया वर्धमानाच्च( नत्वाच्च ) [ महत्त्वात् ] महद्ब्रह्मेति योनिरेव विशि( शे )ष्यते। गर्भं हिरण्यगर्भस्य बीजं वीर्यं क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहं दधामि। क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः। संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेणेत्यर्थः। ३ ॥

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

सर्वयोनिषु देवाद्यासु मूर्तयः संस्थानानि विशिष्टानि भूतानि तासां ब्रह्म महद्योनिरहं वासुदेवः ॥ ४ ॥

---

१ क. ख. घ. ङ. ङ्गः को वा गुणः क। २ क. ख. घ. ङ. बध्नाति।

के गुणाः कथं वा बध्नन्तीत्यत्रोच्यते—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वमिति । प्रकृतिसंभवा अविद्यासंभवाः । निबध्नन्ति नियच्छन्ति । अव्ययमविनाशिनम् ॥ ५ ॥

तत्रैतेषु[2] सत्त्वादिगुणेषु सत्त्वस्य लक्षणमुच्यते—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

तत्रेति । निर्मलत्वात्स्फटिकमणिरिव प्रकाशकम् । अनामयं निरुपद्रवमित्यर्थः । सुखसङ्गेन सुखेच्छया ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

रजो रागात्मकमिच्छात्मकम् । तृष्णाऽप्राप्ताभिलाषः । आसङ्गः प्राप्तविषये मनसः प्रीतिः । तृष्णासङ्गसमुद्भवं तृष्णासङ्गकारणम् । कर्मसङ्गेन कर्मपरतया ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

अज्ञानजमज्ञानजातम् । मोहनं मोहकारणमविवेककारणमित्यर्थः । प्रमादालस्यनिद्राभिर्देहिनं तमो निबध्नाति ॥ ८ ॥

सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥

कर्माणि क्रियायाम् । ज्ञानमावृत्य ज्ञानमाच्छाद्य । तमः प्रमादे प्राप्ताप्रतिपत्तौ ॥९॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

अभिभूयान्यद्द्वयं (य न्यग्भावयित्वा(?) भवति ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

सर्वद्वारेषु सर्वेन्द्रियेषु प्रकाशो ज्ञानं प्रकाशशब्दवाच्यम् ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

---

१ क. तत्र ते° । २ क. ख. ग. घ. °ते । नि° ।

लोभ इति। शास्त्रेण प्राप्तत्यागानामत्यागः। तथा शास्त्रेण निषिद्धपरिग्रहेण-परिग्रहश्च। प्रवृत्तिः प्रकर्षेण वर्तनं चेष्टा स्वभावतः। आरम्भः कर्मणां लौकिकवैदिकानाम्। अशमः [शम.] क्रोधहर्षादिसाम्यं तदभावः। स्पृहेच्छा ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

अप्रकाशोऽज्ञानम्। अप्रवृत्तिरालस्यम्। प्रमादः प्राप्ताप्रतिपत्तिः। मोहोऽविवेकः ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥

प्रलयं मरणम्। उत्तमविदां महदादितत्त्वस्वरूपविदाम् ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

रजसि प्रवृद्धे कर्मसङ्गिषु जायते। प्रलीनो मृतस्तमसि प्रवृद्धे मूढयोनिषु तिर्यक्षु ॥ १५ ॥

कर्मणः सुकृतस्याऽऽहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सुकृतस्य पुण्यस्य फलं सात्त्विकं सत्त्वप्रधानं निर्मलं शुद्धं सुखस्वरूपम्। रजसो राजसस्य कर्मणः। अज्ञानं मोहानुविद्धमित्यर्थः ॥ १६ ॥

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

सात्त्विका देहं त्यक्त्वा स्वकर्मफलभोगार्थमूर्ध्वं देवलोकादीन्गच्छन्ति। राजसाः स्वकर्मफलभोगार्थं मनुष्यलोके तिष्ठन्ति। जघन्यगुणस्तमोगुणः। जघन्यगुणप्रवृत्ता जघन्यगुणवृत्तिस्थास्तामसाः पुरुषा जघन्यगुणवृत्तिस्था मोहनिष्ठा अधो गच्छन्तीत्यर्थः ॥ १८ ॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

---

१ क. ग. घ. ङ. °ह्णं प'।

द्रष्टा विद्वान् । गुणेभ्यः परं गुणव्यापारसाक्षिभूतम् मद्भावमीश्वरभावम् ॥ १९ ॥

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

देहसमुद्भवान्देहस्य कारणभूतान् ॥ २० ॥

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥

किंचिह्नैरतीतोऽतिक्रान्तः ॥ २१ ॥

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

॥ २२ ॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

नेङ्गते न चाल्यते । कार्यकारणसंघाताविषयरूपपारिणता गुणेषु वर्तन्त इति योऽव-
तिष्ठति यः प्रतिपद्यते स न चलति ॥ २३ ॥

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

स्वस्मिन्नात्मनि तिष्ठतीति स्वस्थः । धीरो धीमान् ॥ २४ ॥

किं च—

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

देहेन्द्रियविषयाकारपरिणतान्गुणानतीतोऽतिक्रान्तस्तेषु निःस्पृहः ॥ २५ ॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥

भक्तिरेव योगो भक्तियोगः । ब्रह्मभूयाय । ब्रह्मभावाय कल्पते समर्थो भवति ॥२६॥

---

१ घ. 'त्यैवं यो' ।

कुत इति चेत्—

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥ २७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः॥ १४॥

---

ब्रह्मणः परमात्मनः। हि यस्मात्। प्रतिष्ठा प्रतिष्ठते गच्छति क्षेत्रज्ञोऽभिमुखमनेनेति प्रतिष्ठा। अहमीश्वरः। अमृतस्याव्ययस्याविनाशिनः शाश्वतस्य नित्यस्य धर्मस्य मोक्षसाधनस्य सुखस्य ब्रह्मानन्दस्यैकान्तिकस्याव्यभिचारिणः। तस्मान्मामव्यभिचारेण भक्तियोगेन यः सेवते स त्रीन्गुणान्समतीत्य ब्रह्मभूयाय कल्पते समर्थो भवति॥ २७॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने चतुर्दशोऽध्यायः॥ १४॥

---

(आदितः श्लोकानां समष्ट्यङ्काः—··५०)।

---

(अथ पञ्चदशोऽध्यायः)।

---

श्रीभगवानुवाच—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ १॥

यत्सर्वेषां लोकानामुपरिष्टाद्वर्तमानं सत्यलोकनिवासिहिरण्यगर्भान्तःकरणाभिव्यक्तं सर्वस्य जगतः सृष्टिस्थितिसंहारहेतुभूतमव्यक्तात्मकं ब्रह्मो(ह्म तदू)र्ध्वं [तन्मूलं] कारणं यस्य स ऊर्ध्वमूलः संसारवृक्षः। अश्वत्थः श्वो न तिष्ठतीति। अधःशाखं तस्मात्सत्यलोकादधोभूतलोकान्तर्वासिशाखमश्वत्थं प्राहुः पण्डिताः। अव्ययमविनाशिनम्। छन्दांसि वेदाः पर्णानि। आवरणरूपत्वात्। सोऽश्वत्थस्तं क्षणध्वंसिनमश्वत्थं यस्तं (यो) वेद स वेदविद्वेदार्थविदित्यर्थः॥ १॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके॥ २॥

अधश्चोर्ध्वं महर्लोकप्रभृत्यूर्ध्वं जनलोके प्रसृताः प्रसृतिं गतास्तस्य शाखाः कर्मज्ञानवासनारूपाः शरीरेन्द्रियविषयरूपाः कर्मफलभूताः। गुणप्रवृद्धा गुणैः सत्त्वरजस्तमोभिरुपादानकारणभूतैः प्रवृद्धाः। विषयप्रवाला विषयाः शब्दस्पर्शरूपरसगन्धाः प्रवाला इव यासां शाखानां ताः। अधश्च महर्लोकप्रभृति मूलानि निवृत्तधर्माणि तदुपकरणानि चानुसंततान्यनुसृतानि कर्मानुबन्धीनि कर्मनिमित्तानि। मनुष्यलोकग्रहणमुपलक्षणार्थम्॥ २॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चाऽऽदिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा॥ ३॥

अस्य संसारवृक्षस्य यथोपवर्णितस्य यथोक्तं रूपं नोपलभ्यते। नान्तो न चावसानमुपलभ्यते। न चाऽऽदिः। आदिरिदंप्रथमतया प्रवृत्तिरस्य संसारवृक्षस्य नोपलभ्यते। न च संप्रतिष्ठा मध्यम्। मायामरीच्युदकगन्धर्वनगरद्विचन्द्रादिङ्मोहादिस्वरूपत्वात्। अश्वत्थमेनं यथोक्तं सुविरूढमूलमसङ्गशस्त्रेण सङ्गस्याभावोऽसङ्गः शस्त्रमिव शस्त्रं तेन दृढेन परमार्थनिश्चयदृढीकृतेन छित्त्वा संसारवृक्षं समूलमुद्धृत्य॥ ३॥

ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः।
तमेव चाऽऽद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी॥ ४॥

ततः पश्चात्तत्पदं वैष्णवं परिमार्गितव्यमन्वेष्टव्यं ज्ञातव्यमित्यर्थः। कथं परिमार्गितव्यमित्यत्राऽऽह—तमेव विष्णुमाद्यमादौ भवं पुरुषं जगत्पूर्वकं प्रपद्ये शरणं गच्छामि। यतो यस्मात्संसारमायावृक्षस्य प्रवृत्तिराविर्भावः। प्रसृता निःसृता पुराणी नित्येति॥ ४॥

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः।
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत्॥ ५॥

कृतचेतस्कतया जितसङ्गदोषाः। सङ्गो विषयसंकल्पः स एव दोषो जितः सङ्गदोषो यैस्ते जितसङ्गदोषाः। विषयसंकल्परहिता इत्यर्थः। अध्यात्मनित्या आत्मज्ञाननि-

१ ख. ङ. 'घयाः क' । २ ग. 'नि वृ' । ३ ङ. 'या वशीकृतचेतस्कतया जि' ।

रताः। विनिवृत्तकामास्त्यक्तकामाः। द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैः सुखादिशब्दवाच्यैः। गच्छन्ति प्राप्नुवन्ति। अमूढा विवेकिनः। तद्वैष्णवं पदम्(अव्ययम्)-विनाशि ॥ ५ ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

यन्मम परमं धाम तत्सूर्यो न भासयते। नापि शशाङ्कः। नापि पावकः। यद्गत्वा योगिनो न निवर्तन्ते नहि पुनरागच्छन्तीत्यर्थः ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

ममैवांश एकदेशो जीवलोके प्राणिसमूहे जीवभूतः क्षेत्रज्ञः सनातनो मनः षष्ठं येषां तानि मनःषष्ठानीन्द्रियाणि प्रकृतौ कारणे मायारूपे तिष्ठन्तीति प्रकृतिस्थानि तानि शब्दादिविषयोपलम्भार्थं तदभिमुखं कर्षत्याकर्षति श्रोत्रादीनीन्द्रियाणि शब्दादिभिर्विषयैः संयोजयतीत्यर्थः ॥ ७ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ॥ ८ ॥

शरीरं यदवाप्नोति प्राप्नोति। यच्चापि यदा च प्राप्य उत्क्रामति निर्गच्छतीश्वरः पुरस्वामी क्षेत्रज्ञस्तदैतानि वक्ष्यमाणानीन्द्रियाणि गृहीत्वा संयाति वायुराशयाद्गन्धानिव ॥ ८ ॥

तानि—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

अधिष्ठायाऽऽश्रित्य मनश्चायं क्षेत्रज्ञो विषयाञ्शब्दादीनुपसेवत उपलभते ॥ ९

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

उत्क्रामन्तं शरीरादुद्गच्छन्तं स्थितं वाऽपि शरीरे भुञ्जानं वा विषयानुपलभमानं गुणान्वितं गुणैः सत्त्वरजस्तमोभिर्बुद्ध्याद्याकारपरिणतैरन्वितं विमूढाः कार्यकरणसंघात आत्मत्वदर्शिनो नानुपश्यन्ति नोपलभन्ते। ज्ञानं चक्षुर्येषां ते ज्ञानचक्षुषः। ज्ञानचक्षुषो भूत्वा किं तु पश्यन्तीत्यर्थः ॥ १० ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

---

१ क. ख. घ. ङ. न।

यतन्तो यमनियमादियोगानुष्ठानेन प्रयत्नं कुर्वाणा यतमाना योगिनो योगः सम्यग्ज्ञानं तत्र प्रवृत्ता एनमात्मानं पश्यन्त्युपलभन्त आत्मनि शरीरे । यतन्तो योगानुष्ठाने प्रयतमाना अप्यकृतात्मानोऽभ्यासवैराग्याभ्यामसंस्कृतान्तःकरणा नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥ ११ ॥

अतो यतमाना अज्ञानचक्षुषो नैनं पश्यन्त्यपि । अहमात्माऽनेकयत्नात्मसंस्कारसाध्यत्वाद्दुर्विज्ञेयस्तथा(था)ऽपि सकललोक प्रसिद्धोऽहमित्याह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

यदादित्यगतं तेजः प्रकाशोऽखिलं जगद्भासयते यच्चन्द्रमसि तेजो यच्चाग्नौ तत्तेजो विद्धि मामकम् । तथा च श्रुतिः—"येन सूर्यस्तपति तेजसेद्धः" "तदहं ज्योतिः" इति ॥ १२ ॥

किंचान्यत्—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

गां पृथिवीमाविश्य भूतानि स्थावरजङ्गमात्मकानि धारयामि बिभर्मि । अहमात्मा । ओजसा बलेन । किंचान्यत् । पुष्णामि सरसाः करोमि । रसात्मको रसाधारभूतः ॥ १३ ॥

किंच—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

वैश्वानरो भूत्वौदर्योऽग्निर्भूत्वा । प्राणश्चापानश्च प्राणापानौ ताभ्यां समायुक्तः संधुक्षितश्चतुर्विधमशितं खादितं पीतं लीढम् ॥ १४ ॥

किं विशिष्याभिधीयते—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

सर्वस्य प्राणिजातस्य हृदि हृत्पुण्डरीके संनिविष्टः । अपोहनं हेयबुद्धिस्तस्योपलक्षणार्थत्वेनोपादेयबुद्धिश्च । वेदान्तकृन्निश्चयकृत् । तथा च श्रुतिः—"यो ब्रह्माणं विद-

---

१ क. ख. घ. ङ. 'स्वादि' ।

याति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । प्रहिणोति ददाति । उपदिशतीत्यर्थः । वेदं वेत्तीति वेदविद्वेदार्थविदित्यर्थः । तस्मादहं सर्वलोकप्रसिद्धः ॥ १५ ॥

किंचान्यत्—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

क्षर एकोऽपरोऽक्षरः । तत्र क्षरं दर्शयति—क्षरः सर्वाणि भूतानि प्राणिनः । अक्षरः पुरुषः कूटस्थोऽचलोऽव्याकृतात्मा सोऽक्षर उच्यते ॥ १६ ॥

पुरुषान्तरं दर्शयितुमाह—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

उत्तमः प्रकृष्टतमः । पुरुषः पूर्णमनेन जगदिति परमात्मेत्युदाहृत उक्तो वेदान्तेषु । विशिनष्टि—यः पुरुषो लोकत्रयं पृथिवीमन्तरिक्षं स्वर्गमाविश्य बिभर्ति बलेन धारयति । तथा च श्रुतिः—"येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः" इति । ईश्वरः स्वामी ॥ १७ ॥

तन्नामनिर्वचनार्थमाह—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यस्मात्क्षरं पुरुषमतीतोऽतिक्रम्य स्थितः । अक्षरादपि पुरुषादुत्कृष्टतमः । सर्वेभ्यः पाप्मभ्य उदितत्वात् । तथा च श्रुतिः "उदितिनाम स एव सर्वेभ्यः पाप्मभ्य उदितः" इति । अतो हेतोरस्मिँल्लोके वेदे च पुरुषोत्तम इति प्रथितस्तस्मादहं सर्वलोकप्रसिद्ध इत्यर्थः ॥ १८ ॥

अथेदानीं यः पुरुषोत्तमनामानं पुरुषं वेद तस्य फलमुच्यते—

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

यो मां परमेश्वरमेवमसंमूढो निश्चितबुद्धिर्वेत्ति पुरुषोत्तमम् । नामकर्मस्वरूपबलवीर्यतेजोभिरित्यर्थः ॥ १९ ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

इत्थं गुह्यतमं शास्त्रं शासनात्त्राणनाच्च । उक्तमभिहितमेतच्छास्त्रं बुद्ध्वा बुद्धिमान्ब्रह्मवित्स्यात्कृतकृत्यश्च । कृतं कृत्यं येन स कृतकृत्यः ॥ २० ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने पञ्चदशोऽध्यायः ॥ १५ ॥

( आदितः श्लोकानां समष्ट्यङ्काः—५७० ) ।

( अथ षोडशोऽध्यायः ) ।

नवमेऽध्याये दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतय उक्ता [अधुना ता एव] विस्तरेण प्रतिपादयितुमध्याय आरभ्यते—

श्रीभगवानुवाच—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

अभयमभीरुता । सत्त्वसंशुद्धिरवञ्चनम् । ज्ञानं शास्त्राचार्योपदेशेनाऽऽत्मादिपदार्थावगमः । अवगतानां योगानुष्ठानेन साक्षात्करणं योगः । ज्ञानं च योगश्च ज्ञानयोगौ तयोर्व्यवस्थितिः । दानमर्थिभ्यः स्वद्रव्यसमर्पणम् । दमोऽन्तकरणोपरतिः । यज्ञः स्मार्तः पञ्च महायज्ञाः श्रौता अग्निष्टोमादयः । स्वाध्यायो वेदाभ्यासः । तपस्त्रिविधं कायिकं वाचिकं मानसं चेति । आर्जवमवक्रता ॥ १ ॥

किंच—

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

अहिंसा प्राणिनामपीडा । अक्रोधः प्रसक्तस्य क्रोधस्य त्यागः । शान्तिर्बाह्येन्द्रियोपरतिः । अपैशुनं पररन्ध्रप्रच्छादनम् । दया भूतेषु रक्षितव्यबुद्धिः । अलोलुप्त्वमिन्द्रियाणां विषयसंनिधावविक्रिया । मार्दवमक्रौर्यम् । अचापलं व्यर्थचेष्टावर्जनम् ॥ २ ॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य पाण्डव ॥ ३ ॥

तेजः प्रतापः । क्षमा क्रोधकारणेषु सत्सु चित्तस्याविक्रिया । धृतिः क्षुत्पिपासादिसहनम् । शौचं मलशोधनम् । अद्रोहः परजिघांसाभावः । नातिमानिताऽऽत्मनः पूज्यताप्रतिपत्तिः । एतेऽभयादयो भवन्ति जायन्ते । संपदं लाभम् । देवानामियं दैवी तामभिलक्ष्य जातस्य । संपदं लब्ध्वा जातस्येत्यर्थः ॥ ३ ॥

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

दम्भो धर्मध्वज. । दर्पो धनादिनिमित्तश्चित्तोत्सेकः । अभिमान आत्मनः पूज्यताप्रतिपत्तिः । क्रोधः कोपः । पारुष्यं क्रौर्यम् । अज्ञानमनवबोधः । असुराणामियं संपदासुरी ॥ ४ ॥

अनयोः संपदोः फलमाह—

दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

विमोक्षाय संसारविमोक्षाय । निबन्धोऽविद्याकामकर्मनिबन्धः । मा शुचः शोकं मा कार्षीः ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

सर्गः सृष्टिः । देवानामयं दैवः । असुराणामयमासुरः । दैवः सर्गः । विस्तरशो विस्तरेण ॥ ६ ॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥ ७ ॥

प्रवृत्तिं कर्तव्यानुष्ठानं न विदुर्न जानन्ति । आसुरीं संपदं प्राप्ता आसुराः । आचारः शिष्टाचरणम् । सत्यमवितथवचनम् ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

असत्यं धर्माधर्मौ [ यस्य न विद्येते ] । न यतोऽस्य प्रतिष्ठा तदप्रतिष्ठम् । [ईश्वरः] स्वामी यस्य न विद्यते तदनीश्वरम् । स्त्रीपुंसयोर्मैथुनं संयोगस्तेन संभूतमपरस्परसंभूतम् । कामहेतुरेव कामहैतुकम् ॥ ८ ॥

---

१ क. ख. घ. ङ. °पः । एतेन भयादयो भवन्ति । पा° ।

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

एतां दृष्टिं लोकायतदर्शनमवष्टभ्याऽऽश्रित्य नष्टात्मानोऽल्पबुद्धयो विषयेषु भोग्य-भोक्तृमतिमात्रयुक्ताः प्रभवन्ति जायन्ते । उग्रकर्माणो वधबन्धादिकर्मनिरताः । क्षयाय जगतः प्रभवन्तीति संबन्धः । अहिता आपत्कराः ॥ ९ ॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

दुष्पूरमशक्यपूरणम् । दम्भश्च मानश्च मदश्च तैरन्विताः । दम्भो धर्मध्वजो धार्मिकत्वख्यापनम् । मान आत्मनि संभावनम् । मदो दर्पः । मोहादविवेकाद्गृहीत्वोपादायासद्ग्राहानशुभविश्वासान्प्रवर्तन्ते लोकेऽशुचीनि व्रतानि येषां तेऽशुचिव्रताः क्षपणकादिव्रतानुसारिणः ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

अपरिमेयामविच्छेदरहितां[2] प्रलयान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । कामोपभोगपरमा विषयोपभोगप्रधानाः । एतावदिति निश्चिता एतावान्पुरुषार्थो यदुत शब्दादिविषयोपभोग इति निश्चिताः कृताध्यवसायाः ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥

पाश इव पाशः । बद्धा आकृष्यमाणाः । कामक्रोधौ परमयनं येषां ते कामक्रोधपरायणाः । कामक्रोधवशा इत्यर्थः । ईहन्त आर्जयन्ति कामभोगप्रयोजनार्थमन्यायेनाशास्त्रविहितोपायैरर्थसंचयान्द्रव्यसंचयान् ॥ १२ ॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

इदं द्रव्यं सुवर्णाद्यस्मिन्नहनि प्राप्तम् । इमं मनोरथं प्राप्स्येऽहम् । मनोरथमभिमतविषयम् । इदं धनमस्ति । इदमपि धनं भविष्यति ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

ईश्वरोऽहं सर्वप्रकारेण वरः । भोगी विषयोपभोगवान्सिद्धः संपन्नो बलवान्बलसंपन्नः ॥ १४ ॥

---

१ घ. 'क्तृप्रतिपत्तिमा' । २ ख. ग. 'मेयां विच्छे' । ३ ङ. 'मविच्छे' । ४ ख. 'र्थोपहृत' ।

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

अभिजनवान्बन्धुजनवान् । दास्यामि गोभूहिरण्याद्यर्थिभ्यो वितरिष्यामि । मोदिष्ये हर्षातिशयं च प्राप्स्यामीत्येवमज्ञानविमोहिता अविवेकेन विमोहिताः सन्तः ॥१५॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

अनेकचित्तविभ्रान्ता अनवस्थिताः । [ मोहो ] जाल इ( लमि )वे जालं मोहजालम् । पतन्ति निषीदन्ति ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

आत्मना संभाविताः पूजिताः । स्तब्धा गुरुदेवते अप्यप्रणताः । धननिमित्तो मानो धनमानो धनमानश्च मदश्च धनमानमदो । ताभ्यामन्विता यजन्ते पूजयन्ति । नामयज्ञैर्नामप्रधानयज्ञैः । दम्भेन धार्मिकत्वख्यापनेनाविधिपूर्वकम् ॥ १७ ॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

अविद्यमानैरपि गुणैरात्मन्यध्यारोपितैरप्यहं गुणवानिति प्रतिपत्तिरहंकारस्तमाश्रिता मामीश्वरमात्मपरदेहेषु व्यवस्थितं प्रद्विषन्तोऽसहमाना अभ्यसूयका आत्मपरदेहेषु व्यवस्थित ईश्वरेऽप्यन्यवद्गुणदोषानाविष्कुर्वन्तः ॥ १८ ॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

आसुरीषु सिंहव्याघ्रवराहादिषु ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

आपन्नाः प्राप्ताः । मां सर्वज्ञमीश्वरम् । अधमां निकृष्टां नरकमित्यर्थः ॥ २० ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

त्रिविधं त्रिप्रकारम् । द्वारं पन्थाः । आत्मनो नाशकारणमेतत्त्रयं जह्यात् ॥ २१ ॥

एतत्त्रयत्यागे किं फलमित्यत्राऽऽह--

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

---

१ क. ख. घ. ङ. 'व मोहः । कामभोगेषु प' ।

एतैस्तमोद्वारैर्नरकद्वारैर्विमुक्त आचरति [ अनु ]तिष्ठत्यनुगच्छति ॥ २२ ॥

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

सिद्धिं पुरुषार्थप्राप्तियोग्यताम् । सुखं स्वर्गम् । परां गतिं मोक्षम् ॥ २३ ॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥**

---

तस्माच्छास्त्रं प्रमाणं ते तव [ कार्याकार्यव्यवस्थितौ कार्याकार्य ]व्यवस्थायाम् । शास्त्रविधानोक्तं विधानं विधिः शास्त्रमेव विधानं तेनोक्तं कर्म क्रियाम् । इह संसारेऽर्हसि योग्योऽसि ॥ २४ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने षोडशोऽध्यायः ॥ १६ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—५९४ )।

---

( अथ सप्तदशोऽध्यायः )।

---

ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसीति भगवद्वचनं श्रुत्वाऽर्जुन उवाच—

**अर्जुन उवाच—**

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

शास्त्रविधानमनवेक्ष्य ये देवताः पूजयन्ति तेषां निष्ठा स्थितिः सत्त्वमथवा रज आहो तम इत्यर्जुनस्य प्रश्नः ॥ १ ॥

तस्य प्रतिवचनं श्रीभगवानुवाच—

**श्रीभगवानुवाच—**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

श्रद्धाऽऽस्तिक्यबुद्धिः । स्वभावजा जन्मान्तरानुष्ठितपुण्यपापसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते । सा च सत्त्वे भवा सात्त्विकी ॥ २ ॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

सत्त्वानुरूपा स्वभावानुरूपा श्रद्धा प्राचुर्येण यस्मिन्पुरुषे [स श्रद्धामयः]। सा श्रद्धा या धर्मादावस्तीति बुद्धिः । श्रद्धा या यस्य सात्त्विकी राजसी तामसी वा स यच्छ्रद्धः । स पुरुषः स एव सैव श्रद्धा, [तच्छ्रद्धा]नुरूपकर्मफलभाक् । नन्वेवं तया वै (स एव) सेति वक्तव्यम् । कथं स एव स इति । नायं दोषः । सर्वनाम्ना(म्नो)भिधेयवदनूद्यत्वा[दभिधेयतया विवक्षितपुरुषव]ल्लिङ्गवचना(न)भावात् ॥ ३ ॥

तदेव दर्शयति—

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

यजन्ते पूजयन्ति । सात्त्विकाः श्रद्धोपेताः ॥ ४ ॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

॥ ५ ॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

कर्शयन्तस्तनूकुर्वन्तः । भूतग्रामं पृथिव्यादिसंघातम् । शरीरान्तरस्थं मां कर्शयन्त इति । आसुरो निश्चयो येषां त आसुरनिश्चयास्तामसा इत्यर्थः ॥ ६ ॥

इदानीं सात्त्विकराजसतामसानां प्राणिनामाहारं दर्शयितुमाह—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आह्रियत इत्याहारोऽभ्यवहार्यम् । [ सर्वस्य ] सात्त्विकराजसतामसस्य प्राणिनस्त्रिविधस्त्रिप्रकारः सात्त्विको राजसस्तामसश्चेति भवति जायते प्रियोऽभिमतः । तथा तद्वत्त्रिविधस्य प्राणिनस्त्रिविधः सात्त्विको राजसस्तामसो यज्ञः प्रियो भवति । तथा तपस्तथा दानं तेषामाहारयज्ञतपोदानानां भेदमिमं सात्त्विकराजसतामसलक्षणं शृणवाकर्णय ॥ ७ ॥

---

१ क. कर्षय° । २ क ख. ग. ङ. कर्षय° । ३ ख. ग. ङ. कर्षय° ।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥

आयुर्जीवनकालः । सत्त्वं प्रकृतिः पूर्वसंस्कारः । बलं प्राणवायोः स्थैर्यम् । सुखमानन्दः । संतोषः प्रीतिस्तेषां विवर्धनाः । रस्या मधुराः । स्निग्धाः स्नेहवन्तः । स्थिरा दीर्घकालपरिणामिनः । हृद्या दर्शनमात्रेण प्रीतिहेतवः । एवंभूता आहाराः स्वयं सात्त्विकाः सात्त्विकस्य प्रिया भवन्ति ॥ ८ ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

कट्वम्ललवणा रसविशेषाः । अतिशब्द उष्णादिभिः प्रत्येकमभिसंबध्यते । एते कट्वादय आहारा दुःखशोकामयप्रदा राजसस्य पुरुषस्येष्टा अभिमताः स्वयमपि राजसाः ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

यातयामं गतरसं गतवीर्यं पूति क्लिन्नं विरसं पर्युषितं पक्वमुषसाऽतिक्रान्तमुच्छिष्टं भुक्तावशिष्टम् । अपि चेति समुच्चये । अमेध्यमयज्ञार्हं तामसानां प्रियं तामसप्रियं स्वयमपि तामसम् ॥ १० ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

यष्टव्यमेवेति मनः कृत्वा यज्ञः सात्त्विकः ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

अभिसंधाय तु फलमेतत्फलं मे स्यादित्यभिसंधाय संकल्प्य दम्भार्थमपि चैव यद्धार्मिकत्वख्यापनार्थमेव यो यज्ञ इज्यते निर्वर्त्यते तं यज्ञं राजसं विद्धि ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

विधिहीनमशास्त्रचोदितम् । असृष्टान्नमन्नदानादिरहितम् । मन्त्रहीनं मन्त्रवर्जितम् अदक्षिणं दक्षिणारहितं यज्ञं तामसं परिचक्षते कथयन्ति ॥ १३ ॥

इदानीं त्रिविधं तपः कायिकादि दर्शयितुमाह—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञाः। देवा अग्न्यादयः। प्राज्ञास्तत्त्वविदः। तेषां पूजनम्। शौचं मृज्जलादिसाध्यम्। आर्जवमवक्रचित्तता। ब्रह्मचर्यं स्त्रीभोगवर्जितत्वम्। अहिंसाऽपीडनं प्राणिनां शरीरसाध्यं तपो विधीयते॥ १४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥ १५॥

उद्वेगो दुःखं नोद्वेगकरम्। सत्यमवितथम्। प्रियं च हितं च प्रियहितम्। स्वाध्यायो वेदस्तस्य सदा पाठः स्वाध्यायाभ्यसनम्। इत्येतद्वाङ्मयं वाचा निर्वर्त्यम्॥ १५॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येत्तपो मानसमुच्यते॥ १६॥

मनःप्रसादो मनःस्वच्छता। सौम्यत्वं * सौमनस्यता मुखादिप्रसादकारिण्यन्तःकरणवृत्तिः। मौनं वाक्संयमः। आत्मविनिग्रहो मनसो निरोधः। भावसंशुद्धिरवञ्चनमित्येतन्मानसं तप उच्यते। १६॥

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते॥ १७॥

श्रद्धयाऽऽस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमार्जितं त्रिविधं तपः कायिकादि नरैः पुरुषैः फलनिरपेक्षैर्युक्तैः सात्त्विकमित्यभिधीयते॥ १७॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्॥ १८॥

सत्कारश्च मानश्च पूजा च सत्कारमानपूजाः। सत्कारः साधुरयं तपस्वीति प्रत्ययः। मानः प्रत्युत्थानाभिवादनादिः। पूजा पादप्रक्षालनार्चनादिः॥ १८॥

मूढग्राहेणाऽऽत्मनो यत्पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्॥ १९॥

मूढग्राहेणा[1]विवेकनिश्च[2]येनाऽऽत्मनः स्वस्य पीडया यत्तपः क्रियते परस्यान्यस्योत्सादनार्थं विनाशार्थं वा तत्तामसमुदाहृतमुक्तमित्यर्थः॥ १९॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥ २०॥

दातव्यमिति यद्दानं दीयते हिरण्याद्यनुपकारिणेऽनुपकाराय। देशे पुण्यदेशे। कालेऽयनसंक्रान्त्यादौ। पात्रे षडङ्गवेदविदादौ। तद्दानं सात्त्विकं स्मृतम्॥ २०॥

---

* सौमनस्यमिति युक्तम्।

---

१ क. ख. घ. ङ. 'हेण विजयनि'। २ ख. घ. ङ. 'श्चयं आत्म'।

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

दीयते प्रत्युपकारार्थमुपकृतवानुपकरिष्यतीति प्रत्युपकारं फलं स्वर्गादिफलमुद्दिश्य वा । परिक्लिष्टं क्लेशयुक्तं तद्दानं राजसं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशकाले पुण्यदेशकालावनपेक्ष्यापात्रेभ्यश्च दीयते । अपात्रे संप्रदानं चासत्कृतं प्रियवचनपूजारहितं संप्रदानसंप्रदेययोरवज्ञायुक्तं यदेवं दानं तत्तामसमुदाहृतम् ॥२२॥

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

निर्दिश्यतेऽनेनेति निर्देशः । ब्रह्मणः परमात्मनः स्मृतो ब्रह्मविद्भिरोमिति तदिति सदिति त्रिविधो ब्रह्मणो निर्देशोऽभिधानं स्मृतमित्यर्थः । तेन त्रिविधेन निर्देशेन ब्राह्मणा वेदिनश्च[1] वेदाश्च[2] यज्ञाश्च विहिताः सृष्टाः पुरा पूर्वस्मिन्काले सृष्टिकाले सकलजगत्स्रष्टा हिरण्यगर्भेण ॥ २३ ॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

तस्मादोमित्युदाहृत्य प्रवर्तन्त इत्यस्योदाहृत्य प्रवर्तयितव्याः कर्तव्या इत्यर्थः । विधानोक्ताः शास्त्रोक्ताः । सततं ब्रह्मवादिनां ब्रह्मवादिभिरित्यर्थः ॥ २४ ॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

क्रियन्ते कर्त्रेति क्रियाः । दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः । तदिति ॐतत्सदित्युपलक्षणार्थम् । ॐ तत्सदिति ब्रह्मस्वरूपं प्रतिपाद्य यज्ञदानतपःक्रियाणां फलं चानभिसंधायेश्वरार्पणबुद्ध्या यज्ञदानतपःक्रिया मुमुक्षुभिः क्रियन्ते कर्त्रेत्यर्थः । दानक्रियाश्च विविधा गोभूहिरण्यादिविषयाः । दानक्रियाश्च विविधा इति पुनः क्रियाग्रहणं दानस्य मोक्षं प्रति प्रकृष्टोपकारकत्वप्रदर्शनार्थम् ॥ २५ ॥

किं चान्यत्—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥

---

१ ग. °कारः फ° । २ क. ख. घ. ङ. °लं स्पर्शादि° । ३ ख. ग. °श्च यज्ञाश्च वि° । ४ ङ. °श्च वि° । ५ क. घ. उच्यते ।

सद्भावेऽसतः पुत्रादेरुत्पादने कर्तव्ये तथा साधुभावेऽसत एव सद्वृत्तस्य सद्वृत्ततायां कर्तव्यायामों तत्सदिति ब्रह्मणो निर्देशत्रयं प्रयुज्यते । प्रयोक्तव्यमित्यर्थः । प्रशस्ते कर्मणि तथा मङ्गले कर्माणि पुरुषार्थरूपे वा भावे तत्पदत्रयं ब्रह्मध्यानसाधनत्वेन प्रयोक्तव्यमित्यर्थः ॥ २६ ॥

किंचान्यत्—

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

यज्ञे तपसि दाने च स्थितिर्नैरन्तर्येण प्रवृत्तिः । सा यदा साध्या भवति तदों तत्सदितिपदत्रयेण ब्रह्मोच्यते । नैरन्तर्येण निर्देष्टव्यमित्यर्थः । कर्म चैव तदर्थीयं कर्म यज्ञदानतपःस्वाध्यायलक्षणं तदर्थीयं तदर्थं स्वार्थे ईयप्रत्ययः । तदर्थीयं यदा क्रियते तदाऽनेन पदत्रयेण ब्रह्माभिधीयतेऽभिधातव्यमित्यर्थः ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

अश्रद्धया नास्तिक्यबुद्ध्या हुतं दत्तं तपस्तप्तं कृतं च यत्स्वाध्यायादि तदसदित्युच्यते तदाराधनमप्यसन्न सदसत्तदाराधनं तेन न भवतीत्युच्यते ब्रह्मवादिभिः । किं तदित्यत्राऽऽह— न च तत्प्रेत्य न खलु परलोके स्थितस्योपकारकं नो इह । तस्माद्यज्ञं दानतपःस्वाध्यायादिलक्षणं कर्म फलसङ्गं त्यक्त्वा प्रकृतपदत्रयनिर्देशेन ब्रह्मस्वरूपं ध्यात्वा महत्या श्रद्धया तदाराधनत्वेन कर्तव्यं मोक्षार्थिभिरित्यर्थः ॥ २८ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्याने सप्तदशोऽध्यायः ॥ १७ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—६२२ )।

---

१ घ. एवास॰ । २ क. ॰क्लक॰ ।

( अथाष्टादशोऽध्यायः ) ।

सर्वेष्वध्यायेषु भगवता बहुशः संन्यासस्त्यागोऽपि निर्दिष्टोऽतो विवेकेन तयोः स्वरूपबुभुत्सयाऽर्जुन उवाच—

अर्जुन उवाच—

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

संन्यासलक्षणस्यार्थस्य तत्त्वं तद्भावं वेदितुमिच्छामि । पृथक्त्यागस्वरूपं‌ऽथावृत्तम् । त्यागस्यापि स्वरूपं वेदितुमिच्छामि । केशी नाम कश्चिद्धयच्छद्माऽसुरस्तं निषूदितवा- न्वासुदेवस्तस्य संबोधनम् ॥ १ ॥

अर्जुनेन बुभुत्सितमर्थं यथावद्वक्तुकामः श्रीभगवानुवाच—

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

काम्यानां कमनीयफलानां कर्मणां कर्तव्यतया प्राप्तानां शास्त्रतो रागतो वा न्यासं संन्यासं विदुर्विजानन्ति कवयः पण्डिताः । ननु काम्यानामिति विशेषणमनर्थकं याव- ज्जीवमग्निहोत्रं जुहुयादित्यादिश्रुतिचोदितानां व्यावृत्त्यर्थमिति चेन्न । तेषामपि कमनी- यफलत्वेन काम्यत्वात् । “अथ त्रयो लोका वै लोकानां श्रेष्ठाः श्रेष्ठतमास्तस्माद्विद्यां प्रशंसन्ति” इति श्रुतेः । तथा सर्ववर्णानां स्वधर्मे वर्तमानानां परमिति श्रुतं सुखमिति स्मृतेश्च । तथैव वक्ष्यति भगवान्—‘अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्’ इति । तस्मात्कमनीयफलत्वात्कर्तव्यतया प्राप्तानि नित्यनैमित्तिककाम्यप्रतिषिद्धानि कर्माणि काम्यान्येवातः कर्तव्यतया प्राप्तानां कर्मणां काम्यानामिति स्वरूपानुवादः । सर्वाणि च तानि कर्माणि नित्यनैमित्तिकसंज्ञितानि तेषां फलत्यागमिदं मे फलं स्या- दिति संकल्पत्यागं त्यागं प्राहुर्विचक्षणाः पण्डिताः । सर्वग्रहणेन काम्यकर्मग्रहणं कस्मान्न स्यात्काम्यकर्मत्यागेन तत्फलत्यागस्य सिद्धत्वात्त्याग[संन्यास]योः सांकर्य- प्रसङ्गात् । तस्मात्तेन नित्यनैमित्तिकफलत्यागः ॥ २ ॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥

---

१ क. ख. ‘स्त्यागो नि’ । २ ख. ग. ङ. ‘गो नि’ । ३ क. जुहोतीत्या’ । ४ क. ख. घ. ङ. ‘नां श्रेष्ठतमास्त’ ।

त्याज्यं त्यक्तव्यं दोषवत्कर्म तस्माद्बन्धहेतुत्वात्त्याज्यमित्येके मनीषिणः प्राहुः। अथवा दोषशब्देन रागद्वेषा उच्यन्ते। दोषवद्रागद्वेषवत्ताभ्यां तुल्यं कर्म त्याज्यं बन्धकत्वादित्येके मनीषिणः प्राहुः। नित्यं यज्ञदानतपःकर्म न त्याज्यमिति "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति वचनान्मोक्षार्थिनामपि न त्याज्यमित्यर्थः। ३॥

तस्माद्द्वैविध्यत्यागमतभेदाच्च—

> निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
> त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः॥ ४॥

तत्र त्यागे मम निश्चयं शृणु॥ ४॥

> यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
> यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ ५॥

यज्ञदानतपःकर्म न त्याज्यं सत्त्वशुद्ध्यर्थमीश्वराराधनार्थं च कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनान्युपात्तदुरितक्षयार्थानि मनीषिणां ज्ञानिनाम्। यस्मान्नित्यानि यज्ञदानतपांस्युपात्तदुरितक्षयार्थं तस्मात्कार्याण्येवेत्यभिप्रायः॥ ५॥

एवं तु कर्तव्यानि, कथम्—

> एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
> कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ ६॥

एतानि कर्माणि यज्ञादीनि सङ्गं फलस्पृहां फलानि च त्यक्त्वा कर्तव्यानीति निश्चितम[1]संदिग्धमुत्तमं श्रेष्ठम्॥ ६॥

काम्यकर्मणस्त्यागोऽस्तु—

> नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
> मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥ ७॥

नियतस्य नित्यस्य कर्मणस्त्यागो नोपपद्यते। सत्त्वशुद्ध्यर्थं मुमुक्षूणां कर्तृत्वम्। मोहादज्ञानात्तस्य नियतस्य कर्मणस्त्यागस्तामसः परिकीर्तितः॥ ७॥

> दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
> स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥ ८॥

यत्कर्म कायक्लेशभयाद्दुःखं दुःखतरमिति त्यजेत्स राजसं रजसि भवं त्यागं कृत्वा नैव ज्ञानपूर्वत्यागफलं मोक्षं लभेत्॥ ८॥

> कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
> सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥ ९॥

---

१ क. घ. ङ. मत (तो)। ख. मतं।

कार्यं कर्म कर्तव्यमित्येव यद्यज्ञादि नियतं नित्यं क्रियते निर्वर्त्यते । सङ्गं फले-च्छाम् । तदा विद्यमानसङ्गफलत्यागः सात्त्विकः सत्त्वनिर्वृत्तः । नियतं नित्यं कर्म सङ्गं त्यक्त्वा फलानि च त्यक्त्वा यदा क्रियत (?) इतीश्वरवचनान्नित्यकर्मणां सफलत्वं सिद्धम् ॥ ९ ॥

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥

न द्वेष्टि न क्रुध्यति, अकुशलं दुःखसाधनं कर्म हेमन्ते प्रातःस्नानम् । कुशले सुख-साधनेऽपि तस्मिन्नेव कालेऽग्निसेवादौ नानुषज्जते । त्यागी कर्मफलानां सत्त्वसमाविष्टः सात्त्विको मेधावी विवेकी । अत एव च्छिन्नसंशयः । सत्त्वशुद्ध्यर्थं नित्यानि कर्तव्या-नीति निश्चयात् ॥ १० ॥

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

देहं बिभर्तीति देहभृदविद्यावान्देहात्मदर्शी तेन देहभृता कर्माण्यशेषतस्त्यक्तुं न शक्यम् । यस्तु विद्यया सत्त्वशुद्ध्यर्थं कर्माणि कुर्वन्कर्मफलत्यागी स कर्मसंन्यासीति स्तूयते ॥ ११ ॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

अनिष्टं द्वेष्यमिष्टमिष्यमाणं मिश्रमुभयात्मकमिष्टानिष्टकर्मणः फलं फल्गुतया लीयत इति फलम् । तच्च त्रिविधं त्रिप्रकारं भवति जायतेऽत्यागिनामज्ञानां कर्मिणाम् । पर-मार्थसंन्यासिनां केवलज्ञाननिष्ठानां तु कृतसर्वकर्मसंन्यासान्न तु भवतीति प्रकृतेन संब-न्धः । इति कर्मानुष्ठानेन फलाभिसंधिरहितेन प्राप्तसत्त्वशुद्धीनां सकलकर्मसंन्यासो विधीयते ॥ १२ ॥

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणां सांख्ये कृतान्ते पुरुषार्थ इति सांख्यो वेदः स एव सांख्यम् । स्वार्थेऽण्प्रत्ययः । कृतो निश्चयो यत्र तत्कृतान्तं तत्र कृतान्ते प्रोक्तानि निश्चयायोक्तानि कथितानि । निश्चितार्थे वेदे प्रोक्तानीत्यर्थः । सिद्धये निष्प-त्तये । सर्वकर्मणां शारीरादीनाम् ॥ १३ ॥

तानि कानीत्यत्रोच्यते—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

अधिष्ठानं शरीरं तथा कर्ता योऽहमीश्वरोऽस्मीति मन्यते । करणं च श्रोत्रादीन्द्रियं पृथग्विधं पञ्चधा । विविधा नानाप्रकारा पृथक्चेष्टा प्राणादिवायूनां प्रवृत्तिः । अत्र कारणवर्गे पञ्चानां पूरणं दैवम् ॥ १४ ॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

शरीरं च वाक्च मनश्च शरीरवाङ्मनांसि । तैर्यत्कर्म क्रियारूपं प्रारभते नरो न्याय्यं वा शास्त्रीयं वा ( विपरीतं वाऽशास्त्रीयं वा )। तस्य कर्मण एते पञ्च हेतवः ॥ १५ ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

तत्र कर्मण एवं सति कर्तारं क्रियानिर्वृत्तिकारणं प्रत्यग्बोधरूपं केवलमसहायं तु यः पश्यति यो जानाति । अकृतबुद्धित्वाच्छास्त्राचार्योपदेशासंस्कृतबुद्धित्वात् । न स पश्यति न स जानाति दुर्मतिः । तस्याऽऽत्मनः कर्तृत्वमविद्याकृतं न वास्तवं कर्तृत्वमस्तीति । आत्मानं नित्यशुद्धबुद्धमुक्तस्वरूपं प्रतिपद्यमानस्य सांख्यज्ञाननिष्ठस्य योगिनः सकलकर्मसंन्यास एवेत्याभिप्रायः ॥ १६ ॥

न केवलं तस्य योगिनः सकलकर्मसंन्यास एव—

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥

यस्य शास्त्राचार्योपदेशन्यायैः संस्कृतात्मनोऽहं कर्तेत्येवंभूतो भावः प्रत्ययो न भवत्येत एवाधिष्ठानादयोऽधिष्ठानकर्तृकरणचेष्टादैवानि सर्वकर्मणां कारणान्यविद्यया चैवं कल्पितानि सर्वकर्मणां कर्तारो नाहमहं तु तद्व्यापाराणां साक्षिभूत इति पश्यतीति, बुद्धिर्निश्चयो यस्य नानुशोचितो भवति तदहमकार्षं तेन नरकं गमिष्यामीति न लिप्यते । हत्वाऽपि स इमाँल्लोकान्प्राणिनो न हन्ति न च हननैककर्मणा निबध्यते । ननु हत्वाऽपि न हन्ति न निबध्यत इत्येतद्वचनं विरुद्धम् । नैष दोषः । लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः । तस्माद्युक्तं न हन्ति न निबध्यत इति ॥ १७ ॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

ज्ञायतेऽनेनेति ज्ञानं प्रकाशनम् । ज्ञायत इति ज्ञेयं ज्ञानक्रियाणां कर्मभूतम् । परिज्ञाता ज्ञानक्रियाकर्ताऽविद्याकल्पितः । एतत्त्रिविधं कर्मणः क्रियायाश्चोदना प्रवर्तिका । एतत्त्रितयसंनिधौ प्रवृत्तो दृश्यतेऽत इयं कर्मचोदना ज्ञानज्ञेयपरिज्ञात्रात्मिका । क्रियतेऽनेनेति करणं श्रोत्रादि बुद्धीन्द्रियं वागादि कर्मेन्द्रियं च । कर्म कर्तुः क्रिययाऽऽप्तुमिष्टतमम् । कर्ता योऽहं करोमीति प्रतीयते । एतत्त्रितयं कर्मसंग्रहः कर्म क्रियाल-

क्षणं संगृह्यत आत्मनि व्यवस्थाप्यतेऽनेनेति संग्रहः । करणकर्मकर्तृषु हि सर्वं कर्म समवेतमतोऽयं त्रिविधः कर्मसंग्रह इत्युच्यते ॥ १८ ॥

अथेदानीं क्रियाकारकफलानां सर्वेषां सत्त्वरजस्तमआत्मकत्वात्त्रैविध्यमुच्यते—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

ज्ञानं पूर्वोक्तम् । कर्म क्रियारूपम् । कर्ता ज्ञाता निर्वर्तयिता च । त्रिधा त्रिप्रकारा गुणभेदतः प्रोच्यते कथ्यते गुणसंख्याने गुणप्रतिपादके शास्त्रे यथावद्याथातथ्येन तान्यपि ज्ञानादीन्यपि ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥

अव्यक्तादिस्थावरान्तेषु येन ज्ञानेनैकं भावम् । भावशब्दो वस्तुवाची । एकमात्मनस्तत्त्वमित्यर्थः । ईक्षते पश्यति । येन ज्ञानेन । कथंभूतं भावमविभक्तमभिन्नं ब्रह्मादिस्थावरान्तेषु भूतेषु देहभेदेषु व्योमवन्निरन्तरं साधुज्ञानं विद्धि सात्त्विकं सत्त्वनिर्वृत्तम् ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥

पृथक्त्वेन भेदेन नानाभावान्पृथग्विधांस्त्रिप्रकारान्वेत्ति जानाति । करणं कर्तृत्वेनोपचर्यते । सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

यज्ज्ञानं कृत्स्नवत्सर्वविषयमिवैकस्मिन्कार्ये देहे प्रतिमादौ वा सक्तं निविष्टं नातः परमस्तीति । अहेतुकमयुक्तिनिर्मितमतत्त्वार्थवदल्पं चापरमार्थविषयमल्पं चाल्पत्वादल्पविषयत्वादल्पफलं वा तज्ज्ञानं तामसं तमःप्रभवमुदाहृतमुक्तम् । तामसानां हि प्राणिनामविवेकिनामीदृशं ज्ञानं दृश्यते ॥ २२ ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

नियतं नित्यं सङ्गरहितं फलेच्छावर्जितमरागद्वेषतः कृतं शास्त्रचोदितमित्यर्थः । अफलप्रेप्सुना कर्त्रा कृतं कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

यत्तु कामेप्सुना फलार्थिना साहंकारेण कृतात्मसंभावनेनापरमार्थज्ञानेन बहुलायासं तद्राजसम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

अनुबध्यत इत्यनुबन्धः । कर्मणि क्रियमाणे येन संबध्यते सोऽनुबन्धस्तमनवेक्ष्य कर्मनिमित्तां हिंसां पुरुषकारं वाऽनवेक्ष्य मोहादज्ञानादारभ्यते तत्तामसम् ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

मुक्तसङ्गो मुक्तफलतृष्णः । अनहंवादी य आत्मानं संभावितं न वदति । धृतिरात्मनः संधारणमुत्साहः प्रयत्नस्ताभ्यां समन्वितो धृत्युत्साहसमान्वितः । सिद्धिश्चासिद्धिश्च सिद्ध्यसिद्धी । तयोर्निर्विकारो हर्षविषादरहितः कर्ता सात्त्विकः ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

रागोऽस्यास्तीति रागी । लुब्धो दक्षिणात्यागवर्जितः । हर्षशोकाभ्यामान्वितो हर्षशोकान्वितः । एवंभूतः कर्ता राजसः ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

अयुक्तोऽसमाहितः । प्राकृतोऽपंस्कृतबुद्धिः । स्तब्धोऽप्रमाणशीलः । शठो वञ्चकः । निष्कृत्या चरतीति नैष्कृतिकः क्रूरः । अलसोऽप्रवृत्तिशीलः । विषादी दीर्घसूत्री चिरकारी यः प्राप्तं कर्म दीर्घेण कालेन निर्वर्तयति स तामसः ॥ २८ ॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥

बुद्धेर्ज्ञानस्य धृतेर्धैर्यस्य चैव गुणतो गुणैः पृथक्त्वेन विवेकेनासंकरेण ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

प्रवृत्तिः प्रवर्तनं मोक्षार्थं निवृत्तिः संन्यासः । कार्याकार्ये कार्यं कर्तव्यमकार्यं तदभावः । भयाभये भयं संसारोऽभयं तदभावरूपो मोक्षः । बन्धो बन्धनं मोक्षो मुक्तिः । एतान्सर्वान्या बुद्धिर्वेत्ति सा सात्त्विकी ॥ ३० ॥

---

१ घ. 'णे यन्नियमेन ।

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

यया बुद्ध्या धर्मं श्रेयःसाधनं कार्यमधर्ममकार्यं चायथावत्प्रजानात्यन्यथा प्रजानाति सा राजसी ॥ ३१ ॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान्विपरीतांश्च धृतिः सा पार्थ तामसी ॥ ३२ ॥

अधर्ममश्रेयस्करं धर्ममिति धर्मस्वरूपेण । विपरीतान्विपर्यस्तान्सा तामसी॥३२॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

धृत्या धैर्येण धारयति बिभर्ति प्राणा असवस्तेषां क्रिया व्यापारान् । योगेन समाधिना । अव्यभिचारिण्या नित्यया सा धृतिः सात्त्विकी ॥ ३३ ॥

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

यया तु धर्मकामार्थान्धारयते बिभर्ति प्रसङ्गेन प्रसक्त्या न तु नित्यमित्यर्थः॥३४॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥

तामसी तमःप्रभवा ॥ ३५ ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

सुखं शर्म । अभ्यासादावृत्त्या । रमते रतिं गच्छति । दुःखान्तं दुःखावसानं गच्छति प्राप्नोति ॥ ३६ ॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

यत्तत्सुखमग्रे प्रथमम् । [ परिणाम ] उत्तरकालममृ(लेऽमृ)तोपमम् । आत्मबुद्धिप्रसादजं स्वबुद्धिप्रसादादन्तःकरणप्रसादाज्जातं तत्सात्त्विकम् ॥ ३७ ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

विषयेन्द्रियसंयोगाच्छ्रोत्रादीनां शब्दादिभिः संयोगाद्यत्सुखमग्रेऽमृतोपमं परिणामे कालान्तरे विषमिव तद्राजसम् ॥ ३८ ॥

---

१ क. ख. घ. ङ. °या धृत्या सा सा° ।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

यदग्रेऽवसाने च मोहनकरं निद्रालस्यप्रमादोत्थं तत्तामसं सुखम् ॥ ३९ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

न तदस्ति पृथिव्यां वा दिव्यन्तरिक्षे देवेषु देवैरिन्द्रादिभिरुपलक्षिते स्वर्गे वा । सत्त्वं वस्तु । एभिः प्रकृतिजैर्गुणैः सत्त्वरजस्तमोभिर्विना यत्स्यात्सर्वं सत्त्वं वस्तुजातं सत्त्वरजस्तमोगुणमयमेवेत्यर्थः ॥ ४० ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

ब्राह्मणश्च क्षत्रियश्च विट् च ब्राह्मणक्षत्रियविशस्तेषां शूद्राणां च कर्माणि कर्तव्यानि प्रविभक्तानि । स्वभावो वक्तव्यं (वोऽव्यक्तं) प्रकृतिस्तद्भवैः सत्त्वरजस्तमोभिर्गुणैः॥४१॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥

तपः स्वधर्मवृत्तिः । शौचं शुचेर्भावः । क्षान्तिः क्षमा । आर्जवमृजोर्भावः । ज्ञानमात्मप्रबोधः । विज्ञानममत्वा(आस्तिक्यमागमा)दिपदार्थेष्वस्तित्वबुद्धिः । ब्रह्मकर्म ब्राह्मणस्येदं स्वभावजं प्रकृतिभवम् ॥ ४२ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

शौर्यं मरणनिर्भयत्वम् । तेजः प्रतापः । धृतिर्धैर्यम् । दाक्ष्यं निपुणता । अपलायनं शत्रूणामभिमुखावस्थानम् । दानं हिरण्यादेः पात्रे समर्पणम् । क्षत्रियस्येदं क्षात्रम् । स्वभावजं प्रकृतिभवम् ॥ ४३ ॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

गवां रक्षा रक्षणं गौरक्ष्यम् । वणिक् क्रयविक्रयी तस्य भावो वाणिज्यम् । एतद्वैश्यस्य स्वभावजम् ॥ ४४ ॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

स्वकीये कर्मण्यभिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

यतो यस्मात्प्रवृत्तिरुत्पत्तिर्भूतानां पृथिव्यादीनाम्। येन सर्वमिदं ततं व्याप्तम्। आत्मीयेन कर्मणा तमीश्वरमभ्यर्च्याऽऽराध्य सिद्धिं मोक्षं विन्दति लभते। मानवो मनुष्यः ॥ ४६ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥ ४७ ॥

श्रेयान्प्रशस्यतरः। विगुणो गुणरहितः। शोभनं समग्रमनुष्ठितो यस्तस्मात्परधर्मात्स्वधर्मो विगुणोऽपि श्रेयान्। स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषं पापम्। तस्य दोषाय न भवति। विषजातस्य कृमेः सहजं विषं न मरणाय भवति ॥ ४७ ॥

किंचान्यत्--

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ ४८ ॥

आरभ्यन्त इत्यारम्भाः सर्वारम्भाः सर्वाणि कर्माणि हि यस्मात्त्रिगुणत्वाद्दोषेणाऽऽवृता धूमदोषेणाग्निरिवाऽऽवृताः। तस्मात्सदोषमपि स्वधर्मं त्यक्त्वा परधर्मानुष्ठानेऽपि तस्यानुष्ठीयमानस्य तामसदोषयुक्तत्वाद्दोषान्न मुच्यते ॥ ४८ ॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

इदं नष्टं चेन्नष्टोऽहमिति सक्ता निषण्गा बुद्धिर्यस्य नास्ति सोऽसक्तबुद्धिः। सर्वत्र कर्मसु तत्फलेषु पुत्रमित्रकलत्रादिषु चासक्तबुद्धिः। निर्गतानि कर्माणि यस्मान्मायामरीच्युदकगन्धर्वनगरद्विचन्द्रदिङ्मोहादिषु शुद्धबुद्धमुक्तस्वभावपरमात्मस्वरूपलाभात्मा निष्कर्मा। तस्य भावो नैष्कर्म्यम्। तस्य निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिं निष्पत्तिं परमां प्रकृष्टां पुत्रमित्रकलत्रादिबाह्येभ्यः। तथा च श्रुतिः—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ इति।

'आत्मलाभान्न परं विद्यते' इति स्मृतिः। अतस्तां सिद्धिं संन्यासेनाधिगच्छति ॥ ४९ ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

यथा सिद्धिं प्राप्तो ब्रह्म नैष्कर्म्यमाप्नोति तथा निबोधावगच्छ। मे ममेश्वरस्य मतं समासेनैव संक्षेपेणैव। तथा निष्ठा स्थितिर्ज्ञानस्य या परा प्रकृष्टा तां निबोधेत्यर्थः ॥५०॥

---

१ घ. 'र्म स्वभावसिद्धकर्म कु' । २ क. घ. 'रमध' ।

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

बुद्ध्याऽध्यवसायात्मिकया विशुद्धया सात्त्विक्या युक्तो धृत्या धैर्येण तया च विशुद्धयाऽऽत्मानं कार्यकारणसंघातं नियम्य स्थापयित्वा शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य चापनीय ॥ ५१ ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

विविक्तं योगविरोधिवस्त्वनधिष्ठितं स्थानं तत्सेवितुं शीलं यस्य स विविक्तसेवी । लघु हितं मितं पथ्यमशितुं शीलं यस्य स लघ्वाशी । ध्यानयोगपरो नित्यम् । ध्यानं चित्तस्यैकाग्रता योगस्तस्याऽऽत्मनि स्थापनं ध्यानं च योगश्च ध्यानयोगौ [तौ] परं (परो) निष्ठा यस्य स ध्यानयोगपरः । नित्यं सर्वकालम् । वैराग्यं विगतो रागो यस्मादसौ विरागोऽस्य भावो वैराग्यं समुपाश्रितो रागद्वेषवियुक्त इत्यर्थः । ५२ ॥

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

देहादिष्वात्मबुद्धिरहंकारः । बलं सामर्थ्यं कामरागसंयुक्तं नेतरद्देहादिसामर्थ्यम् । तस्य स्वाभाविकत्वेन त्यक्तुमशक्यत्वात् । ततः केवलशब्दयुक्ततापनादि बलशब्देनोच्यते । दर्पो हर्षः । कामो रागः । क्रोधो द्वेषः । परिग्रहो ममेदमित्यर्थानां वशीकरणम् । एतदहंकारादि विमुच्य निर्ममः शरीरस्थितिसाधनेऽपि वस्तुनि ममत्वबुद्धिरहितोऽत एव शान्त उपरतान्तःकरणो ब्रह्मभूयाय कल्पत इत्युक्तम् ॥ ५३ ॥

इदानीं ब्रह्मभूतस्य लक्षणमुच्यते—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

ब्रह्मैव भूतो ब्रह्मभूतः । प्रसन्नः स्वच्छ आत्मा यस्य स प्रसन्नात्मा । रागद्वेषाभ्यामनाकृष्यमाणहृदय इत्यर्थः । न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु प्राणिषु । एकमेव परमात्मानमात्मत्वेनावस्थितं पश्यन्स एवंभूतो तद्भक्तिमीश्वरभक्तिं भजनं तादात्म्यं परामुत्कृष्टां लभत इत्यर्थः ॥ ५४ ॥

इदानीं ब्रह्मस्वरूपावगतो प्रत्यासन्नं कारणमाह—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

भक्त्या भजनेन मां सर्वेश्वरमभिजानात्यवगच्छति । यावानहमुपाधिकृतभिन्नप्रपञ्चस्वरूपेण यश्चास्मीत्यवाप्तसमस्तोपाधिस्वरूपेणेति च तत्त्वतः परमार्थतः । एवं ततो मां

तत्त्वतो ज्ञात्वा तदनन्तरं विशते प्रविशति। ब्रह्मैव सर्वं प्रतिपद्यत इत्यर्थः। चतुर्थाध्याय उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतमित्युक्तत्वात् ॥ ५५ ॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

सर्वकर्माणि सर्वाणि कर्माणि प्रतिषिद्धान्यपि सदा कुर्वाणोऽहमात्मा व्यपाश्रयो यस्य स मद्व्यपाश्रयः। ईश्वरमेवाहं शरणं प्रपन्नः स एव मम योगक्षेमनिर्वाहक इत्यभिनिवेशवानित्यर्थः। मत्प्रसादादवाप्नोति शाश्वतं पदमनादिमव्ययमनन्तं विष्णोः प्राप्नोतीत्यर्थः ॥ ५६ ॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

सर्वलोकाध्यक्षः सकलकर्मफलभोक्ता वासुदेवो मे शरणमित्यनेन सर्वकर्माणि ममेश्वरस्याऽऽराधनमिति मयि संन्यस्य समर्प्य मत्परोऽहं वासुदेवः परः प्रधानं यस्यासौ मत्परः। बुद्धियोगमुपाश्रित्योक्तया बुद्ध्या योगमाश्रित्य प्राप्य मयीश्वरे चित्तं यस्य स मच्चित्तः सततं सर्वकालं भव जायस्व ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

सर्वदुर्गाणि सर्वाणि दुःखानि मत्प्रसादान्मम प्रसादात्तरिष्यसि। अथ त्वमहंकारादहमेव सर्वशास्त्रविदिति बुद्ध्या न श्रोष्यसि चेन्नाऽऽकर्णयसि चेद्विनङ्क्ष्यसि विनाशं गमिष्यति ॥ ५८ ॥

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यदहंकारमाश्रित्य मद्वचनमवज्ञायाहमेव सर्वशास्त्रविदिति मत्वा न योत्स्य इति मन्यसे मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति तवैष निश्चयो मिथ्या वितथीभूतो यतः प्रकृतिः स्वभावस्त्वां नियोक्ष्यति ॥ ५९ ॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

स्वभावजेन स्वभावसिद्धेन निबद्धो नियोगतो बद्धः सन्स्वेनाऽऽत्मीयेन कर्मणा क्रियया कर्तुं निर्वर्तयितुं नेच्छसि त्वं यत्स्वभावसिद्धं कर्म ॥ ६० ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

ईश्वरो वासुदेवः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयपुण्डरीके। अर्जुनं शुक्लं निर्मलमन्तःकरणं यस्य सोऽपि तत्संबन्धादर्जुनः। हेऽर्जुन तिष्ठति संनिधत्ते। यथा कश्चित्कुशलो दारुचक्रयन्त्रारूढान्भ्रामयत्येवं सर्वप्राणिनोऽहं शयानोऽहमासीनोऽहं स्थितोऽहं जातोऽहं क्षीणोऽहमित्येवंप्रत्ययैः शरीराख्यं यन्त्रमारूढानि भ्रामयंस्तिष्ठतीति विप्रकृष्टेन संबन्धः ॥ ६१ ॥

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

तमेव शरणं सकलदुःखनिवारणमाश्रयं गच्छ भजस्व। सर्वभावेन सर्वैः संकल्पैरयं मम चास्ति स्वाम्ययं मम पोषकोऽयमेवाऽऽचार्य इत्येवमादिभिः। तत्प्रसादात्तस्य शरणागतवत्सलस्यानुग्रहात्परां प्रकृष्टां शान्तिमुपरतिमधिगम्य स्थानं वैष्णवं प्राप्स्यसि गमिष्यसि। शाश्वतं नित्यम् ॥ ६२ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

इतीत्थं ते तव ज्ञानं ब्रह्मसंबोधलक्षणमाख्यातं कथितम्। गुह्यतरं रहस्यतरं विमृश्य विचार्यैतदशेषेण साकल्येन यथेच्छसि तथा कुरु ॥ ६३ ॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

सर्वगुह्यतमं सर्वरहस्यतमं भूयः पुनरपि शृणु मे परमं वचः। ततस्तस्मात्। हितं कुशलम् ॥ ६४ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

मन्मना मद्गतमनाः। मद्याजी मत्पूजकः। मामीश्वरं सकलगुरुं नमस्कुरु। तत्फलमाह—मामेव वासुदेवाख्यं परमेश्वरमेष्यसि। प्रतिजाने उपदिशामि ॥ ६५ ॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

सर्वधर्मान्श्रुतिस्मृत्याचारसिद्धान्परित्यज्य मां नारायणाख्यमाश्रयं व्रज गच्छ। अहं पुनः सर्वज्ञः सर्वशक्तिर्वासुदेवस्त्वां सर्वपापेभ्यो मोक्षयिष्यामि। मा शुचो मा शोकं कार्षीः ॥ ६६ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

इदं शास्त्रं तव हिताय मयोक्तं संसारविच्छित्तये। न विद्यते तपः स्वधर्मवृत्तिलक्षणं यस्यासावतपस्कस्तस्मै। न विद्यते मयि भक्तिर्भजनं सेवा यस्यासावभक्तस्तस्मै। कदाचन कदाचिदपि। न चाशुश्रूषवे यो गुरोरशुश्रूषुस्तस्मै। न च मामीश्वरं सर्वप्राणिसुहृदं योऽभ्यसूयति द्वेष्टि। इदं शास्त्रं त्वयाऽतपस्कायाशिष्याय न वाच्यं तथेश्वरेऽभक्ताय न वाच्यं मां यो द्वेष्टि तस्मै न वाच्यम् ॥ ६७ ॥

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

य इदमावयोः संवादरूपं परममुत्कृष्टं श्रेयःसाधनत्वाद्गोप्यं मद्भक्तेषु मयि परमेश्वरे भक्तिमत्स्वभिधास्यति वक्ष्यति। मयि परमेश्वरे परां भक्तिं कृत्वा विधाय। तस्येदं फलमुच्यते—मामेवैष्यत्यसंशयः ॥ ६८ ॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

न च तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मध्ये कश्चिन्मे प्रियकृत्तमोऽतिशयेन प्रियकृत्। अन्यो नास्तीति प्रकृतेन संबन्धः। न च भविता तस्मादन्यः प्रियतरो भुवि भूमौ ॥ ६९ ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

अध्येष्यते पठिष्यति। य इममावयोः संवादं धर्म्यं धर्मादनपेतम्। तेन पाठकेन ज्ञानयज्ञेन द्रव्यजपोपांशुयज्ञेभ्यः फले. सहस्रगुणेभ्यो विशिष्टतमेनाहमिष्टः पूजितः स्यां भवेयमिति मे मतिर्निश्चयः ॥ ७० ॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥

श्रद्धावान्कर्मणां श्रद्धा विद्यते यस्यासौ श्रद्धावान्। अनसूयोऽसूयारहितोऽध्येतारि। शृणुयादपि किं पुनरर्थस्य प्रतिपत्तौ। सोऽपि श्रोता मुक्तो निर्गतोऽस्माच्छरीरात्प्रेत्येत्यर्थः। शुभान्पुण्याँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम्। तेषां लोकानिति संबन्धः ॥ ७१ ॥

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥

कच्चिदिति प्रश्ने। यथोक्तं श्रुतमिति संबन्धः। अज्ञानमनिश्चयस्तन्निमित्तः संशयः संमोहः स कच्चित्प्रनष्टः ॥ ७२ ॥

एवं पृष्टो भगवताऽर्जुन उवाच—

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥

नष्टो मोह इति । नष्टो मोहो नष्टः संशयो यः पूर्वमासीद्गुरुपुत्रमित्रादयो हन्तव्या आहोस्विन्न हन्तव्या इति । स्मृतिर्लब्धा स्मृतिः सम्यग्ज्ञानं सा च प्राप्ता । त्वत्प्रसादात्तव प्रसादमाश्रित्य तेन मया । अच्युत स्वरूपात्कथमपि न च्यवत इत्युक्तम् । स्थितोऽस्म्युत्थितोऽस्मि । करिष्ये वचनमाज्ञाम् ॥ ७३ ॥

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

इमं यथोक्तम् ॥ ७४ ॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

व्यासो भगवान्कृष्णद्वैपायनः । परं प्रकृष्टं परमात्मविषयत्वात् । योगं सम्यग्ज्ञानम् । योगेश्वराद्योमा योगिनस्तेषामीश्वरात् । साक्षात्प्रत्यक्षं कथयतः स्वयं स्वमुखेन ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

संस्मृत्य पुण्यं पापहारं हृष्यामि च तुष्यामि च मुहुर्मुहुर्भूयो भूयः ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

तच्च रूपं विग्रहमत्यद्भुतम् । हरेर्नारायणस्य । विस्मयः कुतूहलम् ॥ ७७ ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ इति ॥ ७८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

१ क. ख. घ. ङ. उद्यतोऽ° ।

किं बहुना यत्र यस्मिन्पक्षे योगेश्वरः कृष्णः स्थितः। यत्र पार्थो धनुर्धर उद्यतगाण्डीवः। तत्र तस्मिन्पक्षे। श्रीर्देवता विजयोर्थो। विजयः शत्रूणां धर्षणम्। भूतिरैश्वर्यम्। नीतिर्नयः प्रज्ञा जयसाधिका। इतीत्थं मतिर्निश्चयः। इतिकरणं गीताशास्त्रपरिसमाप्त्यर्थम् * ॥ ७८ ॥

इति श्रीमद्धनुमद्विरचिते पैशाचभाष्यनामके श्रीमद्भगवद्गीताव्याख्यानेऽष्टादशोऽध्यायः ॥ १८ ॥

---

( आदितः श्लोकानां समष्ट्यङ्काः—७०० )।

---

समाप्तेयं श्रीमद्धनुमद्विरचितपैशाचभाष्यनामकव्याख्यानसमेता श्रीमद्भगवद्गीता।

---

* एतदग्रे क पुस्तके—

भाष्यं भगवद्गीतायाः पिशाचेन विनिर्मितम्।
आत्मनः प्रकृतिं प्राप्तुं विश्वनाथेन लेखितम् ॥ इत्यधिकम्।

१ क. ख. ग. ङ. 'पार्थो वि'।